॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
१३७



॥ श्रीः ॥

# स्वरवैदिक-प्रश्नोत्तरी

पाणिनीयशिक्षाप्रश्नोत्तरीसहिता

( द्वितीयं संस्करणम् )

लेखक—
पण्डित श्री विश्वेश्वर झा
संस्कृताध्यापक म्यु० बो० जूनियर हाईस्कूल,
दशाश्वमेध, काशी



प्रकाशकः-
जयकृष्णदास-हरिदास गुप्तः
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस

सं० २००९ ] मूल्यं १।) [ सन् १९५२

# प्राक्कथन

स्वरवैदिक प्रश्नोत्तरीका यह अभिनव परिवर्तित संस्करण छात्रोंको परीक्षामें ही नहीं अपितु अध्ययनके लिये भी अधिक उपयोगी सिद्ध होगा। इस संस्करणमें सन् १९२५ से १९५२ ई० तककी परीक्षाओंमें आये हुए स्वरवैदिक तथा पाणिनीयशिक्षाके प्रश्नोंके उत्तर प्रकरणानुसार दिये गये हैं तथा साथ ही साथ जिन २ वर्षों में वे प्रश्न बार २ पूछे गये हैं उन २ वर्षोंकी संख्याओंका उल्लेख भी उत्तरके साथ कर दिया गया है। प्रश्नोंके अविकल रूप ९६ पृष्ठ से आगे छपे प्रश्नपत्रोंमें यथा स्थान पर मिलेंगे। जिज्ञासु छात्रोंको चाहिए कि अध्ययन के समय से ही स्वरवैदिक प्रकरणके साथ ही साथ इस प्रश्नोत्तरी को भी पढ़ें। ऐसा करने पर छात्रोंको भविष्य में प्रश्नोत्तरी रटनेकी आवश्यकता नहीं होगी और इस प्रकार की प्रश्नोत्तरी छापने का हमारा उद्देश्य भी सफल होजायगा। हम चाहते हैं कि जिस ग्रन्थकी जो प्रश्नोत्तरी हो वह उस ग्रन्थके अध्ययनमें छात्रोंको विशेष सहायक होते हुए, प्रश्नोत्तर लेखनका पथप्रदर्शक भी हो। अतः हमने चौखम्बा संस्कृत पुस्तकालयके अन्तर्गत एक अभिनव प्रश्नोत्तरी मालाकी भी स्थापना की है, जिसमें प्रथमासे आचार्य परीक्षा निर्धारित सभी ग्रन्थोंकी प्रश्नोत्तरियाँ अभिनव रूपकी प्रकाशित हो रही हैं। विशेष जानकारीके लिये निःशुल्क सूचीपत्र मंगाकर पढ़िये।

विजया दशमी<br>सं० २००९

विनीत—<br>प्रकाशक

॥ श्रीगणेशाय नमः ॥

# स्वरवैदिक-प्रश्नोत्तरी

पार्वतीशिवयोरङ्के मोदकाशनसंरतः ॥
गणेशो विघ्नशैलघ्नो मङ्गलं तनुतात् सदा ॥
श्रीविश्वेश्वरविश्वविश्रुतपुरीवास्तव्यविश्वेश्वरः ।
श्रीयागेश्वरशर्मणो बुधमणेर्विख्यातकीर्तेः सुतः ॥
स्वं तातञ्च गुरुं सुबोधजनकं श्रीबालबोधाभिधं ।
नत्वा वैदिकप्रक्रियास्वरभवप्रश्नोत्तरीं निर्मिमे ॥

## अथ वैदिकप्रकरणे प्रथमोऽध्यायः ।

### वैदिकप्रक्रियायाः लौकिकप्रक्रियातो भेदहेतुनिरूपणम् ( ई० १९४६ )

ननु रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति भाष्यात् 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुतेश्च कृत्स्नस्यैव व्याकरणस्य वैदिकशब्दसाधुत्वार्थं प्रवृत्ततया-लोके पदपदार्थौ यौ न तौ वेदेऽथवात्र तौ । रूपभेदात् पदं भिन्नमुत्तानादिभिदा स्फुटा ।

वर्णैकत्वात् पदैकत्वं क्वाचित्की रूपभिन्नता ।
प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम् ॥

इति जैमिनीयन्यायमालोक्तरीत्या वैदिकशब्दानां लौकिकशब्दाऽभिन्नतया च स्वरवैदिकप्रक्रिययोः लौकिकप्रक्रियातः पृथक् कृतेः क आशय इति चेदुच्यते—लौकिकशब्देभ्यः-आत्मना, जहार, देवाः, देवैरित्यादिभ्यो भिन्नानां-त्मना, जभार, देवासः, देवेभिः, इत्यादीनां वैदिकशब्दानां सत्त्वेन तन्मात्रव्युत्पादकवैदिकप्रक्रियायाः पृथक्करणम् । अत एव केषां शब्दानां ? लौकिकानां वैदिकानां चेति महाभाष्ये

---

नोटः—जो जो प्रश्न जिन जिन वर्षों में पूछे गये हैं उन उन वर्षों ( ईस्वियों ) के उल्लेख प्रश्नके आगे कोष्ठकमें कर दिये गये हैं । प्रश्नों का अविकल स्वरूप पुस्तकके अन्तमें छपे प्रश्नपत्रोंमें देखिये ।

लौकिकेभ्यो भिन्नतयैव वैदिकान् व्याहरति भगवान् भाष्यकारः । स्वरस्तु लौकिकप्रयोगे काव्यादौ नाद्रियते इति तत्प्रक्रियाया अपि लौकिकप्रक्रियातः पृथक् करणमिति उपरितनोक्तन्यायमालास्थपद्याभ्यामपि प्रायिकेण पदैक्येनेत्यनेन लौकिकेभ्यो भिन्ना अपि वैदिकाः शब्दाः सन्तीति सूचितमित्यलम् ।

**क्षेत्रस्य पतिना** ( १९३५ )—अत्र प्रयोगे समासाऽभावाद् घिसंज्ञायामप्राप्तायां "षष्ठीयुक्तश्छन्दसि वा" इति सूत्रेण वैकल्पिकघिसञ्ज्ञायाम् "आङो नाऽस्त्रियाम्" इति सूत्रेण आङो नादेशे पतिना इति, एवञ्च 'क्षेत्रस्य पतिना' इति भवति ।

**नभस्वत्** ( १९४९ )—नभसा तुल्यम् इति विग्रहे "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्यये "ससजुषोरुः" इति रुत्वे प्राप्ते "नभोङ्गिरोमनुषां वेत्युपसङ्ख्यानम्" इति भत्वे भत्वाद्रुत्वाभावे 'नभस्वत्' इति भवति । लोके तु 'नभोवत्' इति ।

**अङ्गिरस्वत्** ( १९२७ )—अङ्गिरसा तुल्यम् अङ्गिरस्वदिति विग्रहे अङ्गिरस् शब्दात् "तेन तुल्यं क्रिया चेद्वतिः" इति सूत्रेण वतिप्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकत्वे "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि "नभोऽङ्गिरोमनुषां वेत्युपसङ्ख्यानम्" इति भत्वे भत्वाद्रुत्वाभावे 'अङ्गिरस्वत्' इति । लोके तु "अङ्गिरोवत्" इत्येकमेव रूपं भवति ।

**मनुष्वदग्ने** ( १९२२, ४३ )—मनुषा तुल्यमिति विग्रहे अत्र "जनेरुसिः" इति विहित उसिप्रत्ययो बाहुलकान्मनेरपि भवति ततश्च उसि मनुस् इत्यत्र "आदेशप्रत्यययोः" इति षत्वे तुल्यार्थे पूर्ववद् वतिप्रत्यये "नभोङ्गिरोमनुषां वेत्युपसङ्ख्यानम्" इति भत्वे भत्वाद्रुत्वाभावे 'मनुष्वदग्ने' इति ।

**वृषण्वसुः** ( १९३३, ४४, ४७, ५० )—वृषन् वर्षुकं वसु यस्य स वृषण्वसुरित्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तः वृषन्नित्येतद् वसु-अश्व-एतयोत्र परतो भं स्यादित्यर्थक "वृषण्वस्वश्वयोः" इत्यनेन भत्वाद्वार्यते । अत एव ( भत्वादेव ) "पदान्तस्य" इत्यनेन णत्वनिषेधोऽपि न भवति । "अल्लोपोऽनः" इति सूत्रे 'अङ्गस्य' इत्यधिकारात् अल्लोपो न अनङ्गत्वात् ।

**वृषणश्वः** ( १९४२, ४६ )—वृषा अश्वो यस्यासौ वृषणश्वः इत्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तः "वृषण्वस्वश्वयोः" इत्यनेन भत्वाद्वार्यते । अत एव "पदान्तस्य" इत्यनेन णत्वनिषेधोऽपि न भवति । "अल्लोपोऽनः" इत्यत्र "अङ्गस्य" इत्यधिकारात् अल्लोपो न अनङ्गत्वात् ।

ऋकता गणेन ( १९३१ )—अयस्मयादीनि छन्दसि साधूनि भवन्तीत्यर्थक "अयस्मयादीनि च्छन्दसि" इति सूत्रस्थायस्मयादिगणे ऋक्तेत्यादिपाठात् "उभयसंज्ञान्यपीति वक्तव्यम्" इति वार्तिकबलात् सत्यां पदसंज्ञायां "चोः कुः" इत्यनेन कुत्वे भसंज्ञायाश्च जातायां जश्त्वाभावे "ऋकता" इतीष्टसिद्धिः कुतः जश्त्वविधानार्थायाः पदसंज्ञाया भत्वसामर्थ्येन बाधात् । अन्यथा जश्त्वमेव स्यात् कुत्वं न स्यादितीष्टप्रयोगहानिः स्यात् । अतः पदत्वात्कुत्वं भत्वाज्जश्त्वाऽभाव एव । न चात्र "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायम्बाधित्वोभयसंज्ञाविधाने किम्प्रमाणमानन्तर्यादेकैव स्यादिति वाच्यम् । उभयसंज्ञान्यपीति वार्तिकबलात् ।

नैनं हिन्वन्त्यपि वाजिनेषु ( १९२८, ३६, ४८ )—'वाजिनेषु' इत्यस्य अयस्मयादिगणे पाठात् "अयस्मयादीनि च्छन्दसि" इति सामर्थ्यात् "उभयसंज्ञान्यपीति वक्तव्यम्" इत्यनेन भत्वे पदत्वे च जातेऽस्य पदत्वाज्जश्त्वे भत्वात्कुत्वाऽभावे 'वाजिनेषु' इति भवति ।

'इन्धिभवतिभ्यां च' ( १९४४ )—प्रत्याख्यातमिदं सूत्रमिन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति । अयमभिप्रायः— इन्धेर्भाषायां "इजादेश्च गुरुमतोऽनृच्छः" इत्यामा भाव्यं छन्दसि तु अमन्त्र इति प्रतिषेधात् यद्यप्याम् नास्ति तथापि "छन्दस्युभयथा" इति लिटः सार्वधातुकत्वे ङित्वात्समीधे इति नलोपः । अमभावस्त्वार्धधातुकत्वाच्छन्दसि दृष्टानुविधानात् । 'बभूव' इत्यत्र च "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय" इति परिभाषया परान्नित्यस्य वुको बलीयस्त्वात् । कृताकृतप्रसङ्गित्वेन नित्यत्वात् तद्द्वे सिद्धे प्रत्याख्यातमिदं सूत्रमिति शुभम् ।

समीधे दस्यु हन्तमम् ( १९४९, ५२ )—सम्पूर्वक-ञि इन्धी-धातोः लिटि "आदिर्ञिटुडव" इति ञिलोपे लिट इटि एत्वे द्वित्वे अभ्यासकार्ये "इन्धिभवतिभ्यां च" इति कित्वे कित्वात् "अनिदिताम्" इति नलोपे 'समीधे' इति भवति ।

बभूव ( १९५० )—भू धातोर्लिटि रूपं भवति, अत्र "इन्धिभवतिभ्यां च" इति कित्वाद् वृद्ध्यभावे 'भुवो वुक्' इति वुगागमे शेषकार्ये बभूव इति ।

इति प्रथमोऽध्यायः



# अथ द्वितीयोऽध्यायः

यवाग्वाऽग्निहोत्रं जुहोति ( १९४१, ४३ )—अत्र यवागूशब्दाद् द्वितीयायां प्राप्तायां "तृतीया च होश्छन्दसि" इति तृतीयाविभक्तौ अग्निहोत्रशब्दाद् द्वितीया भवति, अग्निहोत्रशब्दो हविषि वर्तते। यस्याग्निहोत्रमधिश्रितममेध्यमापद्येतेत्यादिप्रयोगदर्शनात्। अग्नयेहूयते इति व्युत्पत्तेश्च। यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः।

गामस्य तदहः सभायां दीव्येयुः ( १९३७ )—अत्र "दिवस्तदर्थस्य" इति प्राप्तषष्ठीम्बाधित्वा "द्वितीया ब्राह्मणे" इति द्वितीयाविभक्तौ 'गामस्य तदहः सभायां दीव्येयुः' इति भवति।

या खर्वेण पिबति तस्यै खर्वः ( १९३१ )—इत्यत्र "षष्ठ्यर्थे चतुर्थीति वाच्यम्" इत्यनेन षष्ठीस्थाने चतुर्थीति 'तस्यै' इति, तेन 'या खर्वेण पिबति तस्यै खर्वः' इति भवति।

घृतस्य यजते ( १९४०, ४५ )—अत्र प्रयोगे "यजेश्च करणे" इति सूत्रेण षष्ठीविभक्तिस्तेन 'घृतस्य यजते' इति, लोके तु 'घृतेन यजते' इति भवति।

घस्तान्नूनम् ( १९४९, ५० )—अदेर्लुङि-अदो बहुलं घस्लादेशः स्याच्छन्दसि इत्यर्थक-"बहुलं छन्दसि" इति सूत्रेण घस्लादेशे 'बहुलं छन्दसि, न माङ्योगे' इत्यनेनाडभावे 'घस्तात्' इति भवति।

सग्धिश्च मे ( १९२६, ४४, ४७, ५० )—अदनं ग्धिः। अदेः क्तिनि "बहुलं छन्दसि" इति सूत्रेण घस्लादेशे "घसिभसोर्हलि च" इत्युपधालोपे "झलो झलि" इति सूत्रेण सलोपे "झषस्तथोर्धोऽधः" इति सूत्रेण धत्वे घस्य जश्त्वे ग्धिरिति। नच जश्त्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वमिति वाच्यम्, "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु" इति सूत्रेण जश्त्वे कर्तव्ये तन्निषेधात्। ततः समाना ग्धिः सग्धिरिति समानशब्देन समासे "समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु" इति सूत्रेण समानस्य सादेशे विभक्तिकार्ये 'सग्धिः' इति भवति।

वृत्रं हनति वृत्रहा ( १९३३, ३८ )—अत्र वाक्यांशे हनतीत्यत्र हन् धातोः लटि तिपि शपि "अदिप्रभृतिभ्यः शपः" इति शपो लुकि प्राप्ते 'बहुलं छन्दसि' इत्यनेन बाहुलकात् शपो लुगभावे 'हनति' इति, लोके तु 'हन्ति' इति भवति।

त्राध्वं नो देवाः ( १९२७, ३१, ३५ )—पालनार्थक-ङकारेत्संज्ञक 'त्रै'

धातोर्लोटि ध्वमि शपि "बहुलं छन्दसि" इति सूत्रेण अदादिभिन्नस्यापि शपो लुकि एतत्सामर्थ्यादेव "आदेच उपदेशेऽशिति" इति सूत्रेणात्वे 'त्राध्वम्' इति सिद्धम्, लोके तु 'त्रायध्वम्' इति बोध्यम् ।

**दाति प्रियाणि ( १९३२ )**—दाधातोः लटि तिपि शपि "बहुलं छन्दसि" इति अदादिभिन्नेऽपि क्वचिल्लुक् तेनात्र जुहोत्यादिस्थेऽपि शपो लुकि 'दाति प्रियाणि', इति, लोके तु 'ददाति' इति भवति । मन्मते तु शपः श्लौ कृतेऽपि "बहुलं छन्दसि" इत्यनेन बाहुलकात् द्वित्वं न, अतः "दाति प्रियाणि" इति लोके तु ददाति इति भवति ।

**पूर्णां विवष्टि ( १९२९ )**—वश् धातोः लटि तिपि अत्र जुहोत्यादिभिन्नेऽपि श्लुर्भवतीत्यर्थक "बहुलं छन्दसि" इति सूत्रेण आदादिकादपि वश्धातोः परस्य शपः श्लौ 'श्लौ' इति द्वित्वे हलादिः शेषे "भृञामित्" 'बहुलं छन्दसि' इति सूत्रेणाभ्यासस्येकारे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति सूत्रेण शस्य षत्वे "ष्टुना ष्टुः" इति ष्टुत्वे 'विवष्टि' इति ।

**अक्षन्नमीमदन्त हि ( १९४३ )**—अत्तेर्लुङि अनुबन्धलोपे झि—आदेशे "लुङ्सनोर्घस्लृ" इति घस्लादेशे च्लि-प्रत्यये च्लेस्सिजादेशे प्राप्ते तम्प्रबाध्य "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति च्लेर्लुकि घस्लादेशस्य "गमहन जनखनघसां लोपः क्ङित्यनङि" इति सूत्रेणोपधालोपे "शासिवसिघसीनां च" इति षत्वे चर्त्वे झेरन्तादेशे "इतश्च" इति सूत्रेणेकारस्य लोपे अडागमे तकारलोपे 'अक्षन्' इति भवति ।

**प्रणङ्मर्त्यस्य ( १९३० )**—प्रपूर्वान्नशेर्लुङि तिपि च्लौ "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति च्लेर्लुकि "इतश्च" इतीकारस्य लोपेऽडागमाऽभावे "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इति सूत्रेण तकारस्य लोपे "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वे "नशेर्वा" इतिकुत्वे मर्त्यस्य इति मकारेऽनुनासिकेपरे "यरोऽनुनासिकेऽनुनासिको वा" इति ङकारे प्रणङ्मर्त्यस्य इति सिद्धम्, लोके 'प्राणशत्' इति भवति ।

**आवः ( १९५० )**—आङ्पूर्वकवृञ् धातोर्लुङि तिपि अनुबन्धलोपे च्लौ 'मन्त्रे घसह्वरणश०' इत्यादिसूत्रेण च्लेर्लुकि अडागमे गुणे रपरे "इतश्च" इतीकारलोपे 'हल्ङ्याब्भ्यो दीर्घात्०' इति तकारस्य लोपे विसर्गे "आवः" इति भवति ।

मान आधक् ( १६२८, ४८ )—आङ्पूर्वक दह्धातोर्लुङि तिपि च्लौ "मन्त्रे घस०" इत्यादिसूत्रेण च्लेर्लुकि 'इतश्च' इतीकारस्य लोपे हल्ङ्यादिना तकारस्य लोपे अडागमे "दादेर्धातोर्घः" इति सूत्रेण हस्य घत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति सूत्रेण भष्भावे जश्त्वे चर्त्वे च 'मान आधक्' इति भवति ।

आप्राद्यावा पृथिवी ( १९३६ )—आङ्पूर्वक-प्राधातोर्लुङि सिपि च्लौ "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्योलेः" इति सूत्रेण च्लेर्लुकि "इतश्च" इतीकारस्य लोपे रुत्वे यत्वे यलोपे च 'आप्राद्यावा पृथिवी' इति ।

अक्रन्नुषासः ( १९३४, ४६, ४९ )—कृधातोर्लुङि झिप्रत्यये च्लौ "मन्त्रे-घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति सूत्रेण च्लेर्लुकि "सार्वधातुकम-पित्" इति ङिद्भावेऽडागमेऽनुबन्धलोपे 'झोन्तः' इति झस्यान्तादेशे झेर्ङित्वाद्गु-णाभावे यणि "इतश्च" इतीकारस्य लोपे संयोगान्तलोपे 'अक्रन्' इति सिद्धम् ।

इति द्वितीयोध्यायः

# अथ तृतीयोध्यायः

प्रजनयामकः ( १९४२ )—प्रपूर्वक-ईकारेत्संज्ञक-जन्धातोः णिचि लुङि "अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद्विदामक्रन्निति च्छन्दसि" इति सूत्रेण निपातनाण्ण्यन्ताज्जनेराम्प्रत्ययेऽकोऽनुप्रयोगे गुणोऽयादेशे "आमः" इति सूत्रेण लुङो लुकि 'प्रजनयामकः" इति, लोके प्राजीजनत् इत्यर्थः ।

विदामक्रन् ( १९२७, ४७ )—विदधातोर्लुङि "अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद्विदामक्रन्निति च्छन्दसि" इति सूत्रेण आमि लुङन्त करोत्यनुप्रयोगे तस्य झि–आदेशे "झोऽन्तः" इत्यन्तादेशे विदाम् + कृ + अन्ति इति जाते निपातनात् गुणाभावे यणि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "इतश्च" इतीकारलोपे संयोगान्तलोपे "विदामक्रन्" इति सिद्धम् । लोके तु 'अवेदिषुः' इति भवति ।

मात्वाग्निर्ध्वनयीत् ( १९४४, ४६ )—ण्यन्तात् ध्वन् धातोर्लुङि तिपि च्लौ च्लेः "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति च्लेश्चङादेशे प्राप्ते "नोनयतिध्वनयत्येलय-त्यर्दयतिभ्यः" इति तन्निषेधे "च्लेस्सिच्" इति सिजादेशे इचोरित्वे इडागमे 'इतश्च' इतीकारस्य लोपे "अस्तिसिचोऽपृक्ते" इति सूत्रेण तकारस्य ईडागमे ध्वनि + इ +

स्+ईत् इति जाते गुणेऽयादेशे 'इट ईटि' इति सलोपे अडागमे प्राप्ते 'न माङ्योगे' इति तन्निषेधे दीर्घे 'ध्वनयीत्' इति, अतः मात्वाग्निर्ध्वनयीत् इति, लोके तु घटादेरदिध्वनत् चुरादेरदध्वनत् इति भवति ।

**छन्दसि निष्टर्क्य० व्याख्या ( १९५२ )**—"छन्दसि निष्टर्क्यदेवहूयप्रणीयो॰न्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रस्वरूपम् । निष्टर्क्यादयः शब्दाश्छन्दसि निपात्यन्ते इति सूत्रार्थः । कृन्ततेर्निस्-पूर्वात् "ऋदुपधाच्च" इति सूत्रेण क्यपि प्राप्ते निपातनात् ण्यत् , आद्यन्तयोर्विपर्यासः, निसः षत्वं च-'निष्टर्क्यं' चिन्वीत पशुकामः । देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च-स्पर्धन्त वा उ 'देवहूये' । प्र उत् आभ्यां नयतेः क्यप्-'प्रणीयः' 'उन्नीयः'। उत्पूर्वाच्छिषेः क्यप्-'उच्छिष्यः'। मृङ्स्तृञ्ध्वृभ्यो यत्-'मर्यः' 'स्तर्या, स्त्रियामेवायम्' 'ध्वर्यः'। खनेर्यण्यतौ-'खन्यः' 'खान्यः'। यजेर्यः-शुन्धध्वं दैव्याय कर्मणे 'देवयज्यायै' । आङ्पूर्वात् ज्ञीप्सार्थकप्रच्छेः क्यप् 'ग्रहिज्या॰' इति सम्प्रसारणम्-'आपृच्छ्यं' धरुणं वाज्यर्षति । प्रतिपूर्वक-तन्तुसन्तानार्थकषिवु-धातोः क्यपि षत्वे 'हलि च' इति दीर्घे विभक्तिकार्ये च 'प्रतिषीव्यः' इति । ब्रह्मणि वदेर्ण्यत्-'ब्रह्मवाद्यम्' ।" लोके तु "वदः सुपि क्यप् च" इति क्यप्ण्यतौ । भवतेः स्तौतेश्च ण्यत्-'भाव्यः' 'स्ताव्यः'। उपपूर्वात् चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे-'उपचाय्यपृडम्' ।

**निष्टर्क्यम् ( १९३१ )**—निसुपसर्गपूर्वककृत्-धातोः "ऋदुपधाच्च" इति सूत्रेण क्यपि प्राप्ते तम्प्रबाध्य "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रेण निपातनात् ण्यति प्रत्ययेऽनुबन्धलोपे आद्यन्तयोर्विपर्यासे निसः षत्वे गुणे रपरे ष्टुत्वे विभक्तिकार्ये 'निष्टर्क्यम्' इति भवति ।

**मर्यः ( १९१४, ४१ )**—ङकारेत्संज्ञक-मृधातोः "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रेण निपातनात् यत् प्रत्यये गुणे रपरे प्रातिपदिकत्वे सौ रुत्वे विसर्गे च कृते 'मर्यः' इति ।

**स्तर्या ( १६४२ )**—स्तृञ् धातोः "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडा-

नि" इति सूत्रेग निपातनात् यत् प्रत्यये गुणे रपरे 'अजाद्यतष्टाप्' इति टापि सौ सुलोपे 'स्तर्या' इति भवति।

देवयज्यायै ( १९२८, ३७ )—"छन्दसि निष्टक्र्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि"-इति सूत्रे देवयज्येति निपातनात् देवशब्दे उपपदे यज् धातोः यत् प्रत्यये टापि 'देवयज्या' शब्दस्य 'चतुर्थ्येकवचने 'देवयज्यायै' भवति।

ब्रह्मवाद्यम् ( २९२६, ३२ )—अत्र "छन्दसि निष्टक्र्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रेण निपातनात् ब्रह्मणि वदेर्ण्यति अनुबन्धलोपे उपधा, वृद्धौ णिलोपे सौ अमि पूर्वरूपे "ब्रह्मवाद्यम्' इति, लोके तु वदः सुपि क्यप् च इति क्यप्यतौ तेन 'ब्रह्मोद्यम्' 'ब्रह्मवद्यम्' इति रूपद्वयम्।

पृतनाषाट् ( १९८४, ५२ )—अत्र सुप्युपदे सहेर्ण्विः स्यादित्यर्थक "छन्दसि सहः" इति सूत्रेण मर्षणार्थक-षह्धातोर्ण्विप्रत्यये सर्वापहारे "धात्वादेः षः सः" इति सत्वे प्रातिपदिकादिकार्ये हस्य ढत्वे सुलोपे "सहेः साडः सः" इति षत्वे 'पृतनाषाट्' इति।

दित्यवाट् ( १९५१ )—अत्र दित्योपपदात् वह् धातोः "वहश्च" इति ण्विप्रत्यये प्रातिपदिकादिकार्ये उपधा वृद्धौ हस्य ढत्वे जश्त्वे चर्त्वे सुलोपे 'दित्यवाट्' इति सिद्धम्।

अब्जाः ( १९३४, ४३ )—अप्सु जाताः अब्जाः इत्यत्राबुपपदाज्जन् धातोः "जनसनखनक्रमगमो विट्" इति सूत्रेण विट् प्रत्यये विटः सर्वापहारे "विड्वनोरनुनासिकस्यात्" इति सूत्रेणात्त्वे जश्त्वे विभक्तिकार्ये 'अब्जाः' इति भवति।

दधिक्राः ( १९३६ )—दधि क्रामति दधिक्राः इत्यत्र "जनसनखनक्रमगमो विट्" इति सूत्रेण विटि सर्वापहारे "विड्वनोरनुनासिकस्यात्" इति सूत्रेणादादेशे सौ रुत्वे विसर्गे 'दधिक्राः' इति भवति।

अग्रेगाः ( १९५० )—अग्रे गच्छति अग्रेगा अत्र "जनसनखनक्रमगमो विट्" इति सूत्रेण विटि सर्वापहारे "विड्वनोरनुनासिकस्यात्" इति सूत्रेणादादेशे "हलदन्तात् सप्तम्याः" इति सूत्रेण सप्तम्यलुकि सौ रुत्वे विसर्गे 'अग्रेगाः' इति भवति।

उक्थशासः ( १९३६ )—उक्थानि उक्थैर्वा शंसन्ति इति उक्थशासः यज-

मानाः। अत्र "मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्" इति सूत्रेण ण्विनि प्रत्यये नलोपे "अत उपधायाः" इति सूत्रेण वृद्धौ जसि विभक्तावनुबन्धलोपे सस्य रुत्वे विसर्गे "उक्थशासः" इति भवति।

**अवयाः** ( १९३१ )—अवपूर्वकयज् धातोः "अवयाः श्वेतवाः पुरोडाश्च" इत्यनेन निपातनात् ङस् प्रत्ययेऽनुबन्धलोपे ङित्वाट्टिलोपे सम्बुद्ध्येकवचने सौ निपातनात् दीर्घे सुलोपे रुत्वे विसर्गे च 'अवयाः' इति भवति। नन्विदं सूत्रं व्यर्थम्—"मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्" इति सूत्रस्थेन श्वेतवहादीनां ङस्पदस्येति वार्तिकेन ङसि कृते सौ "अत्वसन्तस्य चाधातोः" इति दीर्घे रुत्वे विसर्गे 'अवयाः' श्वेतवाः, इत्यादि सिद्धमिति चेन्न असम्बुद्धिग्रहणस्य "अत्वसन्तस्य चाधातोः" इति सूत्रेऽधिकारात् सम्बुद्धौ 'अवयाः, श्वेतवाः' इत्यादौ 'अत्वसन्तस्य०' इति सूत्रस्याऽप्रवृत्तेरिति दिक्।

**उपयट्** ( १९५१ )—उपोपपदात् यज्धातोः "विजुपे छन्दसि" इत्यनेन सूत्रेण विच् प्रत्यये सर्वापहारे प्रातिपदिकत्वे विभक्तिकार्ये 'उपयट्' इति भवति।

**चक्राणा वृष्णिम्** (१९२३)—'कृ' धातोः लिटि तस्य स्थाने "लिटः कानज्वा क्वसुश्च" इति सूत्रेण कानजादेशेऽनुबन्धलोपे द्वित्वे "उरत्" इत्यत्वे रपरत्वे "हलादिः शेषः" इति रेफस्य लोपे "कुहोश्चुः" इति चुत्वे यणादेशे णत्वे टापि विभक्तिकार्ये "चक्राणा वृष्णिम्" इति सिद्धम्।

**वीरुधः पारयिष्णवः** ( १९२९, ४६ )—पारीतिण्यन्तात् "णेश्छन्दसि" इति सूत्रेण इष्णुच् प्रत्ययेऽनुबन्धलोपे णेरयादेशे जसि विभक्तावनुबन्धलोपे गुणेऽवादेशे सस्य रुत्वे विसर्गे 'पारयिष्णवः' इति भवति।

**अघायुः** ( १९३५, ३८, ५२ )—परस्याघमिच्छतीत्यर्थे छन्दसि परेच्छायां क्यज् वक्तव्य इति क्यचि प्रत्ययेऽनुबन्धलोपे "अश्वाघस्यात्" इति सूत्रेणादादेशे 'अघाय' इति जाते "क्याच्छन्दसि" इति उप्रत्ययेऽकारस्य लोपे 'अघायु' इत्यस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'अघायुः' इति भवति।

**इयं ते नव्यसी मतिः** ( १९४१ )—अत्र वाक्यांशे मन् धातोः "मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः" इति सूत्रेण क्तिन् प्रत्यये क्तिनः उदात्तत्वे च "लशक्वतद्धिते" इति ककारस्येत्संज्ञायां लोपे च जाते नकारस्य "हलन्त्यम्" इतीत्त्वे जाते "अनुदात्तोप०" इति नकारस्य लोपे प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'मतिः' इति भवति एवञ्च 'इयन्ते नव्यसी मतिः' इति।

**अद्य ममार** ( १६३३, ३७, ४७ )—अत्र वाक्यांशे 'ममार' इत्यत्र वर्तमानकालिकलट्प्रयोगस्थानेऽपि "छन्दसि लुङ्लङ्लिटः" इति सूत्रेण लिटि लिण्निमित्तककार्ये 'ममार' इति। पक्षे 'म्रियते' इति भवति।

**प्रण आयूंषि तारिषत्** ( १९३०, ३१, ४०, ४२, ४५ )—तॄधातोः "लिङर्थे लेट्" इति लेटि "सिब्बहुलं लेटि" इति लेटि परे मध्ये सिपि ततः लेटः स्थाने तिपि प्रत्यये चानुबन्धलोपे "लेटोऽडाटौ" इति अडागमे "इतश्च लोपः परस्मैपदेषु" इति इतो लोपे "सिब्बहुलं णिद्वक्तव्यः" इति वार्तिकेन सिपः णिद्वद्भावे इडागमे धातोर्ऋकारस्य वृद्धौ षत्वे चोक्तं रूपं सिद्धम्। लोके लेट् लकारस्तु भवत्येव नहि, लोटि तु 'तरतु' इति भवति।

**पताति विधुन्न्** ( १९३४ )—पतनार्थकलृकारेत्संज्ञकपत्धातोः छन्दसि लेटि तिपि "लेटोऽडाटौ" इति सूत्रेण तिपः आडागमेऽनुबन्धलोपे 'पताति' इति भवति।

**प्रियः सूर्ये प्रियो अग्नाभवाति** ( १६४६ )—भूधातोश्छन्दसि लेटि तिपि 'लेटोऽडाटौ" इति सूत्रेणाडागमेऽनुबन्धलोपे गुणेऽवादेशे 'भवाति' इति भवति।

**मादयैते** ( १९३९ ) हर्षार्थकमदी धातोः णिचि णिजन्तात् लेटि आतामि शपि गुणेऽयादेशे मादय आतामिति स्थिते "आत ऐ" इति सूत्रेण प्रथमाकारस्य 'ऐ' आदेशे "टित आत्मनेपदानां टेरे" इति द्वितीयाकारस्यैत्वे 'मादयैते' इति।

**उपसंवादाऽऽशङ्कयोश्च** ( १६३६ )—पणबन्धे आशङ्कायाञ्च लेट् स्यात् इत्यर्थः। अहमेवपशूनामीशै। नेज्जिह्मायन्तो नरकं पताम। इत्युदाहरणे।

**गृभाय जिह्वया मधु** ( १९३२, ४३, ४८ )—ग्रहधातोः लोटि सिपि सेर्हौ श्नाप्रत्यये शानजादेशे प्राप्ते "छन्दसि शायजपि" इति सूत्रेण श्नः शायजादेशेऽनुबन्धलोपे सम्प्रसारणे पूर्वरूपे 'हृग्रहोर्भश्छन्दसि" इति हस्य भकारे 'गृभाय' इति सिद्धम्। लोके 'गृहाण' इति भवति।

**गृभ्णामि ते** ( १६२९, ४६ )—ग्रहधातोर्लटि मिपि सार्वधातुकत्वे श्नाप्रत्ययेऽनुबन्धलोपे सम्प्रसारणे 'गृह्णामि' इत्यत्र "हृग्रहोर्भश्छन्दसि" इत्यनेन हकारस्य भकारे 'गृभ्णामि' ते इति सिद्धम्। लोके 'गृह्णामि' इति भवति।

**मध्वा जभार** ( १९२९, ३४ )—हरणार्थकञकारेत्संज्ञकहृधातोः लिटि तिपि णलि द्वित्वे अभ्यासकार्ये वृद्धौ रपरत्वे 'जहार' इति, अत्र "हृग्रहोर्भश्छन्दसि" इत्यनेन हकारस्य भकारे 'जभार' इति। लोके तु 'जहार' इति भवति।

**व्यत्ययो बहुलम्** ( १९२७ )—विकरणानां बहुलं व्यत्ययः स्याच्छन्दसि,

इत्यर्थः। 'आण्डा शुष्मस्य भेदति, अत्र भेदतीत्यस्य रौधादिकात् श्नमि सति 'भिनत्ति' इति प्राप्तेऽनेन शपि भेदतीति भवति। 'जरसा मरते पतिः' अत्र 'म्रियते' इति प्राप्ते तौदादिकशप्रत्ययेन। 'इन्द्रो वस्तेन नेषतु' अत्र नयतु इति प्राप्ते नयतेर्लोट् शप् सिपौ द्वौ विकरणौ। 'इन्द्रेण युजा तरुषेम वृत्रम्' 'तरेम' इत्यर्थः तरतेर्विध्यादौ लिङ् उः सिप् शप् च त्रयो विकरणाः। इत्यादि।

**जरसा मरते पतिः** ( १६३६, ४६ )—अत्र मृङ् धातोर्लटि ते "तुदादिभ्यः शः" इति प्राप्ते "व्यत्ययो बहुलम्" इति व्यत्ययेन शपि अनुबन्धलोपे गुणे रपरे "टित आत्मनेपदानां टेरे" इत्येत्वे 'मरते' इति सिद्धम्। लोके तु शप्रत्यये सति "रिङ्शयग्लिङ्क्षु" इति रिङादेशे इयङि 'म्रियते' इति भवति।

**इन्द्रो वस्तेन नेषतु** ( १९५० )—'नेषतु' इत्यत्र 'नयतु' इति प्राप्ते नयतेर्लोट निपातनात् शप् सिपौ द्वौ विकरणौ "व्यत्ययो बहुलम्" इति व्यत्यये जाते सति च नि + सिप् + शप् + ति इति जाते इकारपकारयोः शकारपकारयोश्चेत्संज्ञायां नि + स् + अ + ति इति स्थिते गुणे षत्वे एरुत्वे 'नेषतु' इति। लोके तु 'नयतु' इति।

**इन्द्रेण युजा तरुषेम वृत्रम्** ( १९४२ )—अत्र तरतेर्विध्यादौ लिङ् लकारे मसि "व्यत्ययो बहुलम्" इति बाहुलकात् 'उः' 'सिप्' 'शप्' च व्यत्ययेन जाते इकारपकारयोः शकारपकारयोश्चेत्संज्ञायां लोपे गुणे रपरे यासुटि उटावितौ नित्यंङित इति सलोपे "अतोयेयः" इति इयादेशे 'लोपो व्योर्वलि, इति यलोपे "आद्गुणः" इति गुणे 'तरुषेम' इति अत्रोप्रत्ययान्तस्य सिपं प्रत्यङ्गत्वात् "सार्वधातुकार्द्धधातुकयोः" इति गुणः प्राप्तः सिबन्तस्य शपि लघूपधगुणश्च प्राप्तो बाहुलकान्न भवति।

**सुप्तिङुपग्रहेति** ( १९४४ )—'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन॥'
शास्त्रकृत् पाणिनिः आचार्यः एषां सुप्प्रभृतीनां व्यत्ययमिच्छति सोऽपि तथाविधो व्यत्ययः बाहुलकेन ( बहुलस्य भावः बाहुलकं तेन बाहुलकेन। मनोज्ञादित्वाद्वुञ् )। सिद्ध्यति। सुतिङादीनां क्रमशः उदाहरणानि—'धुरि दक्षिणायाः' अत्र दक्षिणस्यामिति प्राप्ते इति सुपः, उदाहरणम्। 'चषालं ये अश्वयूपाय तक्षति' अत्र 'तक्षन्ति' इति प्राप्ते इति तिङ उदाहरणम्।

**उपग्रहः** ( २१३१, ३९ )—परस्मैपदात्मनेपदे इति।

'ब्रह्मचारिणमिच्छते' (१९३९)—'इच्छति' इति प्राप्ते परस्मैपदस्योदाहरणम्। 'प्रतीपमन्य ऊर्मिर्युध्यति' 'युध्यते' इति प्राप्ते, आत्मनेपदस्योदाहरणम्। 'मधोस्तृप्ता इवासते' मधुनः इति प्राप्ते इति लिङ्गस्योदाहरणम्। नरः पुरुषः 'अधा स वीरैर्दशभिर्वियूयाः' वियूयात् इति प्राप्ते। कालः कालवाची प्रत्ययः 'श्वोऽग्नीनाधास्यमानेन' लुटो विषये लृट्। 'तमसो गा अदुक्षत्' 'अधुक्षत्' इति प्राप्ते। 'मित्रवयं च सूरयः' मित्रावयम्' इति प्राप्ते। स्वरव्यत्ययस्य फलम्—'गवामिव श्रियसे' इत्यत्र 'तुमर्थे सेसेन्०' इत्यनेन कसेनि कृते "ञ्नित्यादेर्नित्यम्" इति आद्युदात्ते प्राप्ते व्यत्ययेन मध्योदात्तता भवति। कर्तृशब्दः कारकमात्रपरः तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः। 'अन्नादाय' अन्नमत्तीत्यन्नादस्तस्मै अन्ने कर्मण्युपपदेऽदेः कर्मण्यणि प्राप्ते अच्। अवग्रहे विशेष इति (अणि कृते अन्न आदायेति, अचि तु अन्न अदायेति भावः) यङो यशब्दादारभ्य "लिङ्याशिष्यङ्" इति ङकारेण प्रत्याहारः तेन व्यत्ययो भेदतीत्यादिरुक्त एव।

मन्त्रं वोचेमाग्नये (१९४४)—वचेराशीर्लिङि मसि "लिङ्याशिष्यङ्" इति सूत्रेण मसोङि अनुबन्धलोपे "वच उम्" इति उमि मित्त्वादन्त्यादचः परत्वे 'व + उ × च + म इति जाते गुणे यासुटि उभयसंज्ञात्वात् इयादेशे यलोपे सलोपे 'वोचेम' इति। एवञ्च 'मन्त्रं वोचेमाग्नये' इति भवति।

पितरं च दृशेयं मातरं च (१९४९)—दृश् धातोर्लिङि अमि "दृशेरग्वक्तव्यः" इत्यगि यासुटि इयादेशे गुणे 'दृशेयम्' इति लोके तु 'पश्येयम्' इति भवति।

पपिः सोमम् (१९३८)—पा धातोः "आदृगमहनजनः किकिनौ लिट् च" इति सूत्रेण किप्रत्ययेऽनुबन्धलोपे लिड्वदतिदेशेन द्वित्वादिकार्ये आकारस्य लोपे सौ रुत्वे विसर्गे च कृते 'पपिः' इति सिद्धम्।

ददिर्गाः (१९३१, ३२)—दाधातोः "आदृगमहनजनः किकिनौ लिट् च" इति सूत्रेण किप्रत्ययेऽनुबन्धलोपे लिड्वदतिदेशेन द्वित्वे अभ्यासत्वे ह्रस्वे "आतो लोप इटि च" इत्याकारलोपे 'ददि' इति तस्मात् सौ रुत्वे विसर्गे च 'ददिः' इति भवति। अत्र किकिनो स्थाने तिबादयस्तु न लिड्वदतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात्।

जगुरिः ( १९२६ )—गॄधातोः "आदृगमहनजनः किकिनौ लिट् च" इति सूत्रेण कि प्रत्यये लिड्वद्भावे द्वित्वात् परत्वात् "बहुलं छन्दसि" इत्युत्वे प्राप्ते "द्विर्वचनेऽचि" इति निषेधादुत्वाऽभावे द्वित्वे "उरत्" इति सूत्रेणात्वे रपरे "हलादिः शेषः" इति रेफस्य लोपे "अभ्यासे चर्च" इति जश्त्वे जगॄ + इ इति स्थिते "बहुलं छन्दसि" इति उत्तरस्योत्वे रपरे 'जगुरि' इत्यस्मात् सौ रुत्वे विसर्गे 'जगुरिः' इति सिद्धम्। ननु लिड्वद्भावादेव सिद्धे किद्ग्रहणं किमर्थमिति चेन्न "ऋच्छत्यॄताम्" इति गुणबाधनार्थं कित्त्वस्य चारितार्थ्यात्। लोके तु "जग्रिः" इति स्यात्।

गवामिव श्रियसे ( १९४५ )—श्रयतेः "तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः" इति सूत्रेण तुमर्थे कसेन् प्रत्ययेऽनुबन्धलोपे इयङादेशे 'श्रियसे' इति, अत्र नित्त्वादाद्युदात्तः। इह मन्त्रे मध्योदात्तः पठ्यते तत्र बाहुलकात् प्रत्ययस्वरो बोध्यः। लोके 'तु' 'श्रयितुम्' इति।

आहुवध्यै ( १९४१ )—आङ्पूर्वकजुहोतेः "तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः" इति सूत्रेण तुमर्थे कध्यै प्रत्ययेऽनुबन्धलोपे उवङादेशे 'आहुवध्यै' इति। कध्यैन् प्रत्यये कृते सर्वं पूर्ववत् नित्वात् नित्स्वरः ( नित्त्वादाद्युदात्तः )इति विशेषः। लोके तु 'आहोतुम्' इति भवति।

वायवे पिबध्यै ( ११२९, ३५ )—पाधातोः "तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः" इति सूत्रेण तुमर्थे शध्यैन् प्रत्ययेऽनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां शपि "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति सूत्रेण पा इत्यस्य पिबादेशे पररूपे नित्त्वादाद्युदात्ते 'पिबध्यै' इति।

दातवा उ ( १९३२, ३७ )—दाधातोः "तुमर्थेसेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्तवैतवेङ्तवेनः" इति सूत्रेण तुमर्थे तवै प्रत्यये दातवै उ इति जाते आयादेशे "लोपः शाकल्यस्य" इति यलोपे 'दातवा उ' इति भवति।

विभाजं नाशकत् ( १९२८ )—विभक्तुमित्यर्थे विपूर्वक भज्धातोः "शकिणमुल्कमुलौ च" इति णमुल्प्रत्ययेऽनुबन्धलोपे णित्त्वात् "अत उपधायाः" इति सूत्रेण उपधाकारस्य वृद्धौ विभक्तिकार्ये 'विभाजं नाशकत्' इति भवति। लोके तु 'विभक्तुम्' इति भवति।

**अपलुपं नाशकत्** ( १९४०, ४३ )—अपलोप्तुमित्यर्थे अपपूर्वकच्छेदनार्थकलुप्धातोः "शकि णमुल्कमुलौ च" इति सूत्रेण कमुल्प्रत्ययेऽनुबन्धलोपे कित्त्वाद्गुणाभावे विभक्तिकार्ये 'अपलुपम्' इति ।

**ईश्वरो विलिखः** ( १९३३ )—अत्र प्रयोगांशे 'विलिखः' इत्यत्र विपूर्वकलिखधातोः "ईश्वरे तोसुन्कसुनौ" इति सूत्रेण तुमर्थे कसुन् प्रत्ययेऽनुबन्धलोपे कित्त्वात् गुणाभावे "क्त्वातोसुन्कसुनः" इति सूत्रेणाव्ययत्वे अव्ययत्वाच्च "अव्ययादाप्सुपः" इति सुपो लुकि 'विलिखः' इति अत्र प्रत्ययलक्षणेन "अत्वसन्तस्य चाऽधातोः" इति दीर्घस्तु न भवति "न लुमताऽङ्गस्य" इति प्रत्ययलक्षणनिषेधात् ।

**न म्लेच्छितवै** ( १९३४, ४४ )—अत्र प्रयोगांशे म्लेच्छधातोः "कृत्यार्थे तवैकेन्केन्यत्वनः" इति सूत्रेण तवै प्रत्यये इडागमे सौ विभक्तावव्ययत्वात् सुलोपे 'म्लेच्छितवै' इति 'न म्लेच्छितवै' इत्यस्य न म्लेच्छितव्यम्' इत्यर्थः ।

**उदेतोः** ( १९४४, ५१ )—अत्र उत्पूर्वक-इण्धातोः "भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" इति सूत्रेण तोसुन् प्रत्ययेऽनुबन्धलोपे गुणे अव्ययत्वात् सुपो लुकि सस्य रुत्वे विसर्गे 'उदेतोः' इति सिद्धम् ।

इति तृतीयोऽध्यायः ।



## अथ चतुर्थोऽध्यायः

**प्रभ्वी** ( १९३६ )—प्रभुशब्दात् "भुवश्च" इति सूत्रेण ङीष्प्रत्ययेऽनुबन्धलोपे यणादेशे सौ सुलोपे 'प्रभ्वी' इति सिद्धम् ।

**द्व्यचश्छन्दसि** ( १९२८ )—इति सूत्रस्वरूपम् । विकारे मयट् स्यात्, इत्यर्थः । शरमयं बर्हिः । यस्य पर्णमयी जुहूः । इत्युदाहरणम् ।

**सभेयो युवा** ( १९४४, ४७, ५२ )—अत्र प्रयोगांशे 'सभेयः' इत्यत्र सभायां साधुः इति विग्रहे "सभाया यः" इति सूत्रेण यप्रत्यये प्राप्ते तम्प्रबाध्य सप्तम्यन्तात्सभाशब्दात् ढः स्यात् साध्वर्थे इत्यर्थक "ढश्छन्दसि" इति सूत्रेण ढप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण ढस्य-एयादेशे आकारस्य लोपे सौ रुत्वे विसर्गे 'सभेयः' इति सिद्धम् । लोके तु 'सभ्यः' इति भवति ।

**सोमस्येव मौञ्जवतस्य भक्षः** (१९४१)—अत्र प्रयोगांशे 'मौञ्जवतः' इत्यत्र मुञ्जवान् नाम पर्वतः तत्र भवः मौञ्जवतः तस्य इति विग्रहे मुञ्जशब्दादौत्सर्गिकोण्-प्रत्ययो भवति । अत्र छन्दसि यथायथं शैषिकाणामणादीनां घादीनां चापवादस्वरूपोयं 'भवेच्छन्दसि' इति सूत्रविहितयत्प्रत्ययः । परन्तु सर्वविधीनां छन्दसि वैकल्पिकत्वात् पक्षे तेऽपि प्रत्ययाः भवन्ति अतः अत्र औत्सर्गिकाणप्रत्यये णित्त्वादाद्यचो वृद्धौ षष्ठीविभक्तौ ङसि रूपम् 'मौञ्जवतः' इति बोध्यम् ।

**तमु त्वा पाथ्यो वृषा** ( १९३१, ४१ )—अत्र प्रयोगांशे 'पाथ्यः' इत्यत्र पाथसि जले भवः पाथ्यः इति विग्रहे "पाथोनदीभ्यां ड्यण्" इति सूत्रेण ड्यण् प्रत्ययेऽनुबन्धलोपे डित्वाट्टिलोपे प्रातिपदिकत्वे विभक्तिकार्ये 'पाथ्यः' इति सिद्धम् ।

**चनो दधीत नाद्यो गिरो मे** ( १९३३, ५० )—अत्र वाक्यांशे 'नाद्यः' इत्यत्र नद्यां भवः इति विग्रहे "पाथोनदीभ्यां ड्यण्" इति ड्यण्प्रत्ययेऽनुबन्धलोपे णित्वादाद्यचो वृद्धौ डित्वाट्टिलोपे विभक्तिकार्ये 'नाद्यः' इति सिद्धम् ।

**अनुसखा सयूथ्यः** ( १९२८, ३२ )—अत्र प्रयोगांशे सयूथशब्दात् "सगर्भसयूथसनुताद्यन्" इति सूत्रेण यन्प्रत्ययेऽनुबन्धलोपे प्रातिपदिककार्ये 'सयूथ्यः' इति ।

**अग्नियः** ( ९१५१ )—अग्रशब्दात् अग्रे भव इति विग्रहे "अग्राद्यत्" "घच्छौ" इति घप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति घस्येयादेशे अकारस्य लोपे विभक्तिकार्ये 'अग्रियः' इति सिद्धम् ।

**समुद्रिया अप्सरसो मनीषिणः** ( १९३५ )—अत्र प्रयोगांशे समुद्रिया इत्यत्र समुन्दतीति समुद्रः "स्फायितञ्चीति" रगागमे निष्पन्नसमुद्रशब्दात् "समुद्राभ्राद्घः" इति सूत्रेण घप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण घस्येयादेशेऽकारस्य लोपे विभक्तिकार्ये 'समुद्रिया' इति भवति ।

**बर्हिष्येषु निधिषु प्रियेषु** ( १९२७ )—बृंहधातोः 'बृंहतेर्नलोपश्च' इति सूत्रेण इसप्रत्यये बृंहतेर्नलोपे च गुणे रपरे बर्हिस् शब्दात् बर्हिषि दत्तम् इति व्युत्पत्तौ "बर्हिषि दत्तम्" इति सूत्रेण यत्प्रत्ययेऽनुबन्धलोपे षत्वे सुपि 'बर्हिष्येषु' इति सिद्धम् ।

**याते अग्ने रक्षस्या तनूः** ( १९३८, ४२, ४४ )—हन्यतेऽनया सा हननी

रक्षसां हननी रक्षस्येति विग्रहे "रक्षोयातूनां हननी" इति सूत्रेण रक्षस् शब्दात् यत् प्रत्यये विभक्तिकार्ये 'रक्षस्या' इति सिद्धम् ।

**तद्वानासामुपधानो मन्त्र०** ( १९४०, ४८ )—"तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति सूत्रस्वरूपम् । तदस्ति अस्य अस्मिन् वा तद्वान् । उपधीयते अनेनेत्युपधानम् । तथा च मत्वन्तात् प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्स्यात् तत्प्रथमासमर्थमुपधानो मन्त्रश्चेत् स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत् भवन्ति । मतोश्च लुक् । अथवैवं बोध्यम्—मत्वन्तप्रकृतिकात् प्रथमान्तात् उपधानकरणीभूतमन्त्रार्थकादिष्टकारूपसम्बन्धिनि यत् स्यान्मतोश्च लुक् इत्यर्थः । उदाहरणञ्चात्र–'वर्चस्याः' । 'ऋतव्याः' ।

**वर्चस्याः** ( १९३९ )—वर्चस्वानुपधानो मन्त्र आसामिष्टकानाम् इति वर्चस्या इति वर्चस् शब्दात् "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति सूत्रेण यत्प्रत्ययेमतुपो लुकि जसि विभक्तिकार्ये 'वर्चस्याः' इति सिद्धम् ।

**ऋतव्याः** ( १९४३, ४६, ५२ )—ऋतुशब्दोयस्मिन्मन्त्रेऽस्ति स ऋतुमान् ऋतुमानुपधानो मन्त्र आसामिष्टकानाम् 'ऋतव्याः' इति विग्रहे पूर्ववत् "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति सूत्रेण यत्प्रत्यये मतुपो लुकि विभक्तिकार्ये "ऋतव्याः" इति ।

**आश्विनीरुपदधाति** ( १९४९ )—अश्वः अस्ति अस्य इत्यश्वशब्दात् "अत इनिठनौ" इति सूत्रेणेनि प्रत्यये तदन्तात् मतुपि प्रत्यये च कृते अश्विमान् स उपधानो मन्त्र आसामिष्टकानामिति विग्रहे "अश्विमानण्" इति सूत्रेणाणि विहिते मतोश्च लुकि टिलोपे प्राप्ते "इनण्यनपत्य" इति प्रकृतिभावे णित्वादाद्यचो वृद्धौ ङीपि विभक्तिकार्ये 'आश्विनीः' इति सिद्धम् । एवञ्च 'आश्विनीरुपदधाति' इति भवति ।

**वयस्यासु मूर्ध्नो मतुप्** ( १९४७ )—"वयस्यासु मूर्ध्नो मतुप्" इति सूत्रस्वरूपम् । "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति सर्वं सूत्रमनुवर्तते । मतोरिति पदमावर्त्य पञ्चम्यन्तं बोध्यम् । तथा च—मतुबन्तो यो मूर्धन्शब्दस्ततो मतुप् स्यात् प्रथमस्य मतोर्लुक् च वयःशब्दवन्मन्त्रोपधेयास्विष्टकासु । यस्मिन् मन्त्रे मूर्धवयः शब्दौ स्तस्तेनोपधेयासु मूर्धन्वतीरुपदधातीति प्रयोगः ।

**मूर्धन्वतीरुपदधाति** ( १९४४ )—अत्र प्रयोगांशे मूर्धवच्छब्दात् पूर्वेण

( तद्वानासामिति० ) यति प्राप्ते "वयस्यासु मूर्ध्नो मतुप्" इति मतुपि प्रथमस्य मतोर्लुकि च कृते "अनो नुट्" इति नुडागमे उगितो ङीपि विभक्तिकार्ये "मूर्धन्वतीः इति भवति ।

**नभस्यो मासः ( १९४७ )**—अत्र प्रयोगांशे 'नभस्यः' इत्यत्र नभोऽभ्रं तदस्मिन्नस्तीति विग्रहे मतुपं बाधित्वा "मत्वर्थे मासतन्वोः" इति सूत्रेण यत्प्रत्यये विभक्तिकार्ये 'नभस्यः' इति भवति ।

**ओजस्या तनूः ( १९४० )**—ओजो यस्याः यस्यां वा अस्ति इति विग्रहे मतुपं बाधित्वा "मत्वर्थे मासतन्वोः" इति सूत्रेण यत्प्रत्ययेऽनुबन्धलोपे टापि सु विभक्तौ दीर्घे सस्य लोपे 'ओजस्या' तनूः इति सिद्धम् ।

**मधव्यः ( १९२८, ३२, ५२ )**—मधुशब्दात् "मधोर्ञ च" इति सूत्रेण चकारात् यत् प्रत्ययेऽनुबन्धलोपे "ओर्गुणः" इति सूत्रेण गुणेऽवादेशे प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'मधव्यः' इति ।

**वेशोभगीनः ( १९३६ )**—वेशोबलं तदेव भगः तदस्यास्तीति वेशोभगीनः । वेशोभग्यः अत्र "वेशोयशआदेर्भगाद्यल्खौ" इति सूत्रेण खप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण खस्य ईनादेशेऽकारस्य लोपे सौ रुत्वे विसर्गे 'वेशोभगीनः' इति भवति ।

**ये ते पन्थाः सवितः पूर्व्यासः ( १९३०, ५० )**—अत्र प्रयोगांशे 'पूर्व्यासः' अत्र पूर्वैः कृतमिति विग्रहे "पूर्वैः कृतमिनयौ च" इति सूत्रेण यत्प्रत्ययेऽनुबन्धलोपेऽकारस्य लोपे पूर्व्यशब्दाज्जसि "आज्जसेरसुक्" इति असुकि कित्त्वादन्त्यावयवे अनुबन्धलोपे सस्य रुत्वे विसर्गे च कृते 'पूर्व्यासः' इति सिद्धम् । लोके तु 'पौर्विकाः' इति भवति ।

**यस्येदमप्यं हविः ( १९२९ )**—"अद्भिः संस्कृतम्" इति विग्रहे तृतीयान्तादप्शब्दात् "अद्भिः संस्कृतम्" इति सूत्रेण यत्प्रत्ययेऽनुबन्धलोपे सुपो लुकि विभक्तिकार्ये 'अप्यम्" इति भवति एवञ्च 'यस्येदमप्यं हविः' इति भवति ।

**सहस्रियासो अपां नोर्मयः ( १९४८ )**—अत्र वाक्यांशे सहस्रेण सम्मिताः ( सम्मितः सदृशस्तुल्यः इत्यर्थः ) इति विग्रहे तृतीयान्तात्सहस्रशब्दात्सम्मितमित्येतस्मिन्नर्थे घः स्यादित्यर्थक "सहस्रेण संमितौ घः" इति सूत्रेण घप्रत्यये "आय-

नेयीनीयियः०" इति घस्येयादेशे "यस्येति च" इत्यकारस्य लोपे विभक्तिकार्ये 'सह-स्त्रियासः' इति भवति।

सोम्योब्राह्मणः (१६३३, ४४)—सोममर्हतीति विग्रहे "सोममर्हति यः" इति सूत्रेण यप्रत्ययेऽकारस्य लोपे विभक्तिकार्ये "सोम्यः' इति भवति। यज्ञार्हब्राह्मण इत्यर्थः।

सोम्यं मधु (१९४७)—सोमस्य विकारः सोम्यं मधु इति अत्र सोमशब्दात् "मये च" इति मयडर्थे यप्रत्यये "यस्येति च" इत्यकारस्य लोपे विभक्तिकार्ये 'सोम्यं' मधु इति भवति सोममयमित्यर्थः।

मधव्यः (१९५२)—मधुशब्दात् "मधोः" इति सूत्रेण मयडर्थे यत् प्रत्ययेऽनुबन्धलोपे गुणेऽवादेशे विभक्तिकार्ये 'मधव्यः' इति भवति।

सप्तदशाक्षरश्छन्दस्यः (१९३७-४५)—इत्यत्र "अक्षरसमूहे छन्दस उपसङ्ख्यानम्" इति छन्दः शब्दात् यत्प्रत्यये सौ रुत्वे विसर्गे 'छन्दस्यः" इति एवञ्च 'सप्तदशाक्षरश्छन्दस्यः इति भवति।

शिवतातिः (१९५२)—शिवस्य भावः शिवतातिः अत्र "भावे च" इति सूत्रेण शिवशब्दात् तातिप्रत्यये विभक्तिकार्ये 'शिवतातिः' इति भवति।

शन्तातिः (१९४६)—अत्रापि 'भावे च' इति सूत्रेण शम्शब्दात् ताति प्रत्यये परसवर्णे विभक्तिकार्ये 'शन्ताति' इति भवति।

इति चतुर्थोऽध्यायः समाप्तः।



## अथ पञ्चमोऽध्यायः

विंशिनः (१९५२)—विंशतिर्गोत्राणि परिमाणमेषामिति विग्रहे "शन् शतो डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः" तत्र 'विंशतेश्चेति वाच्यम्" इति डिनि प्रत्ययेऽनुबन्धलोपे "तिर्विंशतेर्डिति" इति तिलोपे विभक्तिकार्ये "विंशिनः" इति भवति।

यज्ञं विप्रस्य मावतः (१९४१, ५०)—अहमिवेति मावान् तस्य मावतः अत्र "युष्मदस्मदोः सादृश्ये वतुब्वाच्यः" इति वतुपि "प्रत्ययोत्तरपदयोश्च" इति

सूत्रेण मादेशे आ सर्वनाम्नइत्यात्त्वे षष्ठीविभक्तौ ङसि रुत्वे विसर्गे च 'मावतः' इति भवति ।

सादन्यं विदथ्यम् ( १९५० )—सदनं गृहमर्हति इति सादन्यमत्र विदथो यज्ञस्तमर्हति' अत्र सदनशब्दात् "छन्दसि च" इति सूत्रेण यत् प्रत्यये "अन्येषामपि दीर्घः" इति दीर्घे विभक्तिकार्ये 'सादन्यम्' इति। विदथ्यमत्रापि यदनेन सूत्रेण ।

संवत्सरीणः ( १९२७, ५१ )—संवत्सरे जातः संवत्सरीणः इति विग्रहे संवत्सरशद्वात् "सम्परिपूर्वात्ख च" इति सूत्रेण खप्रत्यये "आयनेयीनीयियः फ ढ ख छ घां प्रत्ययादीनाम्" इति खस्येनादेशे "यस्येति च" इत्यकारलोपे णत्वे विभक्तिकार्ये 'संवत्सरीणः' इति भवति ।

यदुद्वतो निवतः ( १९४२ )—अत्र "उपसर्गाच्छन्दसि धात्वर्थे" इति सूत्रेणोपसर्गात् वति प्रत्यये 'यदुद्वतो निवतः' इति भवति । उद्गतान्निर्गतादित्यर्थः ।

पञ्चथम् ( १९४३ )—पञ्चानां पूरणमित्यर्थे डटि कृते मटं बाधित्वा "थट् च छन्दसि" इति थडागमेऽनुबन्धलोपे विभक्तिकार्ये 'पञ्चथम्' इति भवति मटि 'पञ्चमम्' भवति । लोके तु 'पञ्चमम्' इत्येकमेव रूपम् ।

उभयाविनम् ( १९३० )—उभयशद्वात् "बहुलं छन्दसि" इति विनिप्रत्ययेऽनुबन्धलोपे "छन्दोविन् प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्" इति वार्तिकेन दीर्घे विभक्तिकार्ये 'उभयाविनम्' इति ।

रथीरभूत् ( १९३१ )—रथोऽस्यास्तीति रथीरिति विग्रहे रथशद्वाद् "छन्दसीवनिपौ च वक्तव्यौ" इति सूत्रेण ईप्रत्ययेऽकारस्यलोपे रथीशद्वात् सौ रुत्वे विसर्गे च कृते 'रथीः' इति सिद्धम् एवञ्च 'रथीरभूत्' इति बोध्यम् ।

सुमङ्गलीरियं वधूः ( १९३४, ३६, ४९ )—सुष्टु मङ्गलं सुमङ्गलम् "सुः पूजायाम्" इति समासः सुमङ्गलमस्ति अस्या अस्य वेति 'सुमङ्गलीः' अत्र "छन्दसिवनिपौ च वक्तव्यौ" इत्यनेन सुमङ्गलशब्दात् मत्वर्थे ईप्रत्ययेऽकारस्य लोपे सौ रुत्वे विसर्गे च कृते "सुमङ्गलीः' इति भवति ।

तयोर्दार्हिलौ च छन्दसि ( १९३४ )—इति सूत्रस्वरूपम् । 'इदन्तदोर्यथासङ्ख्यं ( इदं शब्दाद्दा तत् शब्दाद्र्हिल् ) स्तः' इति सूत्रार्थः । इदाहि व उपस्तुतिम् । तर्हि । इत्युदाहरणम् ।

**कथा ग्रामं न पृच्छसि ( १९२९ )**—केन हेतुना न पृच्छसीत्यर्थः। 'कथा' इत्यत्र "था हेतौ च छन्दसि" इति सूत्रेण किमस्था प्रत्यये "प्राग्दिशो विभक्तिः" इत्यधिकाराद्विभक्तिसंज्ञायां "किमः कः" इति सूत्रेण किमः कादेशे अव्ययत्वे सुपोलुकि 'कथा ग्रामं न पृच्छसि' इति घटक 'कथा' इति सिद्धम्।

**कथा दाशेम ( १९३२, ३८, ४३ )**—केन हेतुना दद्याम इत्यर्थे किम् शब्दात् "था हेतौ च च्छन्दसि" इत्यनेन किमस्थाप्रत्यये तस्य "प्राग्दिशो विभक्तिः" इत्यधिकारात् विभक्तिसंज्ञायां "किमः कः" इति कादेशे अव्ययसंज्ञायां सुपोलुकि 'कथा' इति भवति एवञ्च 'कथा दाशेम' इति भवति।

**आसुतिं करिष्ठः ( १९२८ )**—कर्तृशब्दात् "तुश्छन्दसि" इति सूत्रेण इष्टन् प्रत्ययेऽनुबन्धलोपे "तुरिष्ठेमेयस्सु" इति तृलोपे 'करिष्ठ' इत्यस्य प्रातिपदिकत्वे विभक्तिकार्ये 'करिष्ठः' इति भवति।

**तं प्रत्नथा ( १९३५, ५२ )**—प्रत्न शब्दात् "प्रत्नपूर्वविश्वेमात्थाल् छन्दसि" इति सूत्रेण थाल्प्रत्ययेऽनुबन्धलोपेऽव्ययत्वे सुपोलुकि 'प्रत्नथा' इति सिद्धम्।

**अनसन्तान्नपुंसकाच्छन्दसि ( १९३६ )**—इति सूत्रस्वरूपम्। अन्नन्तात् असन्ताच्च नपुंसकात् तत्पुरुषाट्टच् स्यात् स च समासान्त इत्यर्थः। 'ब्रह्मसामं भवति' 'देवच्छन्दसानि' इत्युदाहरणम्।

**ब्रह्मसामं भवति ( १९३३, ३९ )**—अत्र "अनसन्तान्नपुंसकाच्छन्दसि" इति सूत्रेणटचि प्रत्ययेऽनुबन्धलोपे शेषकार्ये 'ब्रह्मसामंभवति' इति भवति।

**उभयतोदतः प्रतिगृह्णाति ( १६२६ )**—उभयतो दन्ताः यस्येति विग्रहे "छन्दसि च" इति सूत्रेण दन्तशब्दस्य 'दतृ' आदेशेऽनुबन्धलोपे शसि रूपम्। लोके तु 'उभयतोदन्तान्' 'उभयतोदन्तकान्' इति।

**हतमाता ( १९५१ )**—हता माता यस्येति हतमातेत्यत्र "नद्यृतश्च" इति सूत्रेण कपि प्राप्ते "ऋतश्छन्दसि" इति सूत्रेण तन्निषेधे 'हतमाता' इति भवति।

इति पञ्चमोऽध्यायः।

—∞∞—

# अथ षष्ठोऽध्यायः

**यो जागार ( १९४७ )**—अत्र प्रयोगांशे जागृधातोर्लिटि प्रथमपुरुषैकवचने तिपि णलि 'एकाचो द्वे प्रथमस्य' इति नित्ये द्वित्वे प्राप्ते "छन्दसि वेति वक्तव्यम्" इति विकल्पेन विधानात् द्वित्वाभावपक्षे णित्वात् वृद्धौ रपरत्वे 'जागार' इति एवञ्च 'यो जागार' इति बोध्यम् ।

**दाधार यः पृथिवीम् ( १९३७, ४५ )**—अत्र प्रयोगांशे 'दाधार' अत्र धृधातोर्लिटि तिपि णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रपरत्वे 'दधार' इति जाते "तुजादीनां दीर्घोऽभ्यासस्य" इति सूत्रेणाभ्यासदीर्घे 'दाधार' इति सिद्धम् एवञ्च 'दाधार यः पृथिवीम्' इति भवति ।

**स तूताव ( १९३२, ५१ )**—तुः इति सौत्रो धातुस्तस्माल्लिटि तिपि णलादेशेऽनुबन्धलोपे आर्द्धधातुकत्वे द्वित्वे वृद्धौ आवादेशे 'तुताव' इति स्थिते 'तुजादीनां दीर्घोऽभ्यासस्य" इति सूत्रेणाभ्यासस्य दीर्घे 'तूताव' इति ।

**तृचं सूक्तम् ( १९३४, ३९ )**—तिस्रः ऋचः यस्मिन् तत् तृचमिति विग्रहे "ऋक्पूरब्धूः पथामानक्षे" इत्यप्रत्यये "ऋचित्रेरुत्तरपदादिलोपश्च च्छन्दसि" इत्यनेन ऋचि शब्दे परे त्रेः सम्प्रसारणे उत्तरपदादेर्लोपे च जाते ततश्च सौ अमादेशे पूर्वरूपे च 'तृचम्' इति भवति ।

**रेवान् ( १९४० )**—रयिशब्दात् "तदस्यास्त्यस्मिन्निति मतुप्" इति सूत्रेण मतुपि "रयेर्मतौ बहुलम्" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति सूत्रेण पूर्वरूपे "छन्दसीरः" इति सूत्रेण मकारस्य वकारे गुणे विभक्तिकार्ये 'रेवान्' इति सिद्धम् ।

**श्रितानो ग्रहाः ( १९४६ )**—पाकार्थकञकारेत्संज्ञक 'श्री' धातोः निष्ठायां क्तप्रत्ययेऽनुबन्धलोपे "अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्ताः" इति सूत्रेण निपातनात् श्रीणातेर्ह्रस्वत्वे जाते विभक्तिकार्ये 'श्रितानो ग्रहाः' इति घटक- 'श्रिता' इति सिद्धम् ।

**चिखाद ( १९५२ )**—दैन्यार्थकखिदधातोर्लिटि व्यत्ययेन परस्मैपदे तिपि णलि द्वित्वेऽभ्यासकार्ये चिखिद् + अ इति जाते "खिदेश्छन्दसि" इति सूत्रेणैव आत्वे "चिखाद" इति आत्वाभावपक्षे 'चिखेद' इति भवति ।

**भय्यः ( १९४३, ४७ )**—बिभेत्यस्मादिति भय्य इत्यत्र 'कृत्यल्युटो बहुलम्'

इत्यनेनापादाने बाहुलकात् यति प्रत्ययेऽनुबन्धलोपे "भय्यप्रवय्ये च छन्दसि" इति सूत्रेण यतिपरेऽयादेशनिपातनात् 'भय्य' इति जाते सौ रुत्वे विसर्गे 'भय्यः' इति भवति ।

**प्रकृत्यान्तः पादमव्यपरे** ( १९२९, ३५ )—इति सूत्रस्वरूपम् । ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारपरेऽति । उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । इत्युदाहरणे ।

**उप प्रयन्तो अध्वरम्** ( १९३३ )—अत्र प्रयोगे "एङः पदान्तादति" इति सूत्रेण पूर्वरूपे प्राप्ते "प्रकृत्यान्तः पादमव्यपर" इति सूत्रेण प्रकृतिभावे 'उपप्रयन्तो अध्वरम्' इति भवति ।

**तेनो अवन्तु** ( १९२९, ४१ )—अवतेर्लोटि प्रथमपुरुषबहुवचने 'अवन्तु' इति भवति ततः ते नो अवन्तु इति दशायां "एङः पदान्तादति" इति सूत्रेण पूर्वरूपे प्राप्ते तम्प्रबाध्य "अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च" इति सूत्रेण प्रकृतिभावे 'ते नो अवन्तु' इति भवति ।

**कुशिकासो अवस्यवः** ( १९३१ )—अत्रापि "एङ पदान्तादति" इति पूर्वरूपे प्राप्ते तम्प्रबाध्य "अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च" इति सूत्रेण प्रकृतिभावे 'कुशिकासो अवस्यवः' इति भवति ।

**उरो अन्तरिक्षम्** ( १९४५ )—अत्रापि "एङः पदान्तादति" इति पूर्वरूपे प्राप्ते तम्प्रबाध्य "यजुष्युरः" इति सूत्रेण प्रकृतिभावे 'उरो अन्तरिक्षम्' इति भवति ।

**यजुषि पादाभावादनन्तःपादार्थं वचनम्-अस्याशयः** ( १९४५ )—ननु 'उरो अन्तरिक्षम्' इत्यत्र "प्रकृत्यान्तः पादमव्यपरे" इत्यनेनैव प्रकृतिभावे सिद्धे व्यर्थोयं योग इत्याशङ्कयाह—"यजुषि पादाभावादनन्तः पादार्थं वचनम्" इति ।

**आपोजुषाणो०** ( १९४२ )—आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे । इति सूत्रेण यजुषि अति प्रकृतिभावो भवति । तेन 'आपो अस्मान् मातरः' 'जुषाणो अप्तिराज्यस्य' इत्यादौ प्रकृतिभावः । "अम्बे अम्बाले अम्बिके' अत्र अस्मादेव वचनात् "अम्बार्थनद्योर्ह्रस्वः" इति सूत्रेण ह्रस्वो न भवति ।

**अङ्ग इत्यादौ च** ( १९४० )—प्रकृत्या भवतीत्यस्य सम्बन्धः । अतिक्रान्तप्रत्यवमर्शिना तच्छब्देन इतिशब्दार्थं व्याचष्टे—तस्याङ्गशब्दस्यादिस्तदादिः तद्रूपो

योऽकारस्तस्मिन् परे पूर्वो य एङ् स प्रकृत्या भवतीत्यर्थः । नन्वत्र चकारः किमर्थं इति चेच्छृणु । असति चकारेऽङ्गशब्दस्यैवैङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः। तथा च 'अङ्गे अङ्गे' इत्यत्रैव स्यात् 'अङ्गे अदीव्यत्' इत्यत्र न स्यात् । सति तु तस्मिन्नङ्गशब्दस्य य एङ् यत्र कुत्रचित् अति प्रकृत्या भवति तदादौ चाति परतो यः कश्चिदेङ् स प्रकृत्या भवतीत्ययमर्थो भवति तेन "अङ्गे अङ्गे अदीव्यत्' 'प्राणो अङ्गे इत्युभयत्राऽपि भवति ।

**अयं सो अध्वरः ( १९३७ )**—अत्रापि पूर्वरूपे प्राप्ते "अनुदात्ते च कुधपरे" इति सूत्रेण प्रकृतिभावे 'अयं सो अध्वरः' इति भवति ।

**त्रीरुद्रेभ्यो अवपथाः ( १९४२ )**—अत्रांशे 'अवपथा' अत्र वप् धातोर्लङि थासि शपि अडागमे 'तिङ्ङतिङः' इति अनुदात्तत्वेरुत्वे विसर्गे 'त्रिरुद्रेभ्यो + अवपथाः' इति दशायां पूर्वरूपे प्राप्ते "अवपथासि च" इति सूत्रेण प्रकृतिभावे 'त्रिरुद्रेभ्यो अवपथा' इति भवति ।

**अभ्र आँ अपः ( १९३४, ३८ )**—अत्र "आङोऽनुनासिकश्छन्दसि" इति सूत्रेण अकारे परे आङोऽनुनासिके जाते 'अभ्र आँ अपः' इति भवति । अत्र "उपदेशेऽजनुनासिक इत्" इति सूत्रेण इत्संज्ञा तु न भवति सूत्रे उपदेशग्रहणात् ।

**ईषा अक्षो हिरण्ययः ( १९३२ )**—इत्यत्र "ईषा अक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः" इति वार्तिकेन प्रकृतिभावे 'ईषा अक्षो हिरण्ययः' इति भवति ।

**ज्या इयम् ( १९२८, २९ )**—अत्र गुणे प्राप्ते "ईषा अक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः" इत्यनेन प्रकृतिभावे 'ज्या इयम्' इति भवति ।

**पूषा अविष्टु ( १९३६ )**—अत्र सवर्णदीर्घे प्राप्ते "ईषा अक्षापीनां छन्दसि प्रकृतिभावो वक्तव्यः" इति प्रकृतिभावे 'पूषा अविष्टु' इति भवति ।

**एष स्य भानुः ( १९३५ )**—अत्र "स्यश्छन्दसि बहुलम्" इति स्योत्तरसु इत्यस्य लोपे 'एष स्य भानुः' इति भवति ।

**ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ( १९३२ )**—इति सूत्रस्वरूपम् । ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान् मन्त्रे, इत्यर्थः । 'सुश्चन्द्र दस्म' 'हरिश्चन्द्रो मरुद्गणः' इत्युदाहरणे ।

**सुश्चन्द्र दस्म ( १९३९, ४२, ५० )**—अत्र प्रयोगांशे सु + चन्द्र इति स्थिते

"ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे" इति सूत्रेण ह्रस्वात् परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमे उटावितौ "स्तोः श्चुना श्चुः" इति सूत्रेण श्चुत्वे 'सुश्चन्द्र' इति एवञ्च "सुश्चन्द्र दस्म' इति भवति ।

सोमः सधस्थम् ( १९२७, ३१ )—सह तिष्ठतीत्यर्थे "आतोऽनुपसर्गे कः" इति सूत्रेण स्थाधातोः कप्रत्ययेऽनुबन्धलोपे "आर्द्धधातुकं शेषः" इति सूत्रेणार्द्ध-धातुकत्वे "आतो लोप इटि च" इति सूत्रेणाकारस्य लोपे 'सधमादस्थयोश्छन्दसि' इति सूत्रेण सहस्य सधादेशे विभक्तिकार्ये 'सधस्थम्' इति, लोके 'सहस्थम्' इति भवति एवञ्च 'सोमः सधस्थम्' इति ।

मरुद्भिरुग्रः पृतनासु साह्ळा ( १६३८, ४८ )—अत्र प्रयोगांशे सहेः तृचि अनडादिकार्ये सह + ता इति स्थिते ढत्वधत्वष्टुत्वढलोपादिकार्ये दीर्घे प्रातिशाख्य-भाष्येणाचोर्मध्यस्थस्य डस्यलत्वे ढस्य ह्ळश्च विहिते 'साह्ळा' इति भवति ।

(अत्रत्यप्रश्नोत्तरैऽचोर्मध्यस्थस्येत्यादि प्रातिशाख्यं कौमुदीमूलएव पर्याप्तम्) इति

अष्टापदी ( १९५१ )—अष्टौ पादा अस्या इति विग्रहे बहुव्रीहिसमासे समा-सत्वात् सुपोलुकि "छन्दसि च" इति सूत्रेण अष्टन आत्वे "सङ्ख्यासुपूर्वस्य" इति सूत्रेण पादोत्तराकारस्यलोपे "पादोऽन्यतरस्याम्" इति ङीपि अनुबन्धलोपे विभक्ति-कार्ये 'अष्टापदी' इति भवति ।

नू मर्तः ( १९२६, १३, ३६ )—अत्र "ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इति सूत्रेण 'नु' इत्यस्य दीर्घे 'नू' मर्तः इति । लोके 'नु' मर्तः इति ।

भरता जातवेदसम् ( १९३०, ३९ )—अकारेत्संज्ञकभृधातोर्लोटिथप्रत्यये सार्वधातुकत्वे शपि अनुबन्धलोपे गुणे रपरे "लोटो लङ्वत्" इति लङ्वद्भावे "तस्थस्थमिपां तान्तन्तामः" इति सूत्रेण तादेशे "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इति दीर्घे "भरता" इति सिद्धम् लोके तु 'भरत' इति भवति ।

शृणोत ग्रावाणः इत्यत्र ऋचि तुनु० दीर्घत्ववारणप्रकारः ( १६३७ )—"ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" अत्र सूत्रे तङिति थादेशस्य ङित्वपक्षे ग्रहणम् तेन 'शृणोत ग्रावाणः' अत्र न दीर्घः अत्र ( शृणोत इत्यत्र ) 'तप्तनप्तनथनाश्च' इति तबादेशेन पित्त्वात् ङित्वं नास्ति ।

"निपातस्य च" इत्यनेनैवत्वादीनां दीर्घत्वे सिद्धे ऋचि तुनुघ० इति

**सूत्रे तुनुघेत्यादीनां फलम् ( १९३८ )**—ननु "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इति सूत्रस्थतुनुघेत्यादीनां निपातत्वात् "निपातस्य च" इत्यनेनैव दीर्घे सिद्धे त्वादीनां ग्रहणं व्यर्थमिति चेन्न। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युरेवञ्च द्रव्यार्थानां त्वादीनां दीर्घार्थं "निपातस्य च" इति सूत्रस्याऽप्रवृत्त्या त्वादीनां ग्रहणस्याऽवश्यकत्वात्। इति शम्।

**यत्रा नश्चक्रा ( १९४६ )**—अत्र प्रयोगांशे 'यत्रा' अत्र "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इति सूत्रेण दीर्घे 'यत्रा' इति एवञ्च यत्रानश्चक्रा" इति भवति।

**द्व्यचोतस्तिङः ( १९४५ )**—द्वौ अचौ यस्मिन् स तस्य द्व्यचः, तिङ् प्रत्याहारः ( तिपः आरभ्य महिङ्पर्यन्तम् ) अन्ते यस्य सः तस्य तथा च द्व्यच्कविशिष्टस्य तिङन्तस्यातो दीर्घः स्यादृचि इति सूत्रार्थः। 'चक्रा जरसम्' इत्युदाहरणम्।

**चक्रा जरसम् ( १९४० )**—चक्रेतिलिटो मध्यमपुरुषबहुवचनस्य रूपमत्र "द्व्यचोऽतस्तिङः" इति सूत्रेण दीर्घे 'चक्रा' इति भवति। एवञ्च 'चक्र जरसम्' इति भवति।

**पूरुषः ( १६५२ )**—अत्र पुरुषशब्दात् सौ रुत्वे विसर्गे पुरुषः एवं स्थिते अन्येषामपि पूर्वपदस्थानां दीर्घः स्यादित्यर्थक "अन्येषामपि दृश्यते" इति सूत्रेण पकारोत्तरवर्तिन उकारस्य दीर्घे 'पूरुषः' इति। दीर्घाभावपक्षे पुरुषः इति रूपद्वयं मन्त्रे भवति। लोके तु केवलं 'पुरुषः' इत्येकमेव रूपं भवति।

**बहुलं छन्दस्यमाङ्योगेऽपि ( १९३८ )**—इति सूत्रस्वरूपम् माङ्योगेऽप्यमाङ्योगेऽपि बहुलमडाटौ भवतः, अमाङ्योगेऽपि न भवतः माङ्योगेऽपि च भवतः इत्यर्थः। जनिष्ठा उग्रः सहसे तुराय। मा वः क्षेत्रे परबीजान्यवाप्सुः। इत्युदाहरणे।

**इरयो रे अत्र द्विवचनग्रहणफलम् ( १९४६ )**—इर इत्येतस्य रे आदेशः स्याच्छन्दसि इत्यर्थः। अत्र द्विवचननिर्देशात् लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते तद्यथा—उदाहरणे विविच्यते।

**प्रथमं दध्रे आपः ( १६४७ )**—अत्र प्रयोगांशे धाञो लिटि झादेशे झस्य "लिटस्तझयोरेशिरेच्" इति सूत्रेण 'इरेचि' कृते द्वित्वेऽभ्यासकार्ये "इरयो रे" इति सूत्रेण 'इरे' इत्यस्य परत्वात् रेभावे कृतेऽनजादित्वादालोपेऽप्राप्ते रेभावस्याभीयत्वेनासिद्धत्वाल्लोपे रेशब्दस्येटि कृते पुनरपि "इरयो रे" इति रे आदशे 'दध्रे' इति। ननु 'लक्षणप्रतिपदोक्तपरिभाषया कथमिडागमविशिष्टे "इरयो रे" इत्येतस्य प्रवृत्तिरिति चेन्न इरयोरिति द्विवचननिर्देशात् लक्षणप्रतिपदोक्तपरिभाषायाः अप्रवृत्तेः।

**शकुना इव पप्तिम** ( १९२६ )—पतनार्थकपत्लृ-धातोः लिटि मसि आर्द्ध-धातुकत्वे मादेशे मस्य इडागमेऽभ्यासत्वे 'हलादिः शेषे' "तनिपत्योश्छन्दसि" इति सूत्रेणोपधालोपे 'पप्तिम' इति सिद्धम् । लोके 'पेतिम' इति भवति ।

**श्रुणुधी गिरः** ( १९३८ )—श्रुधातोः लोटि सिपि हौ "श्रुवः श्र च" इति सूत्रेण-श्रुवः श्रभावेश्नुप्रत्यये विधानसामर्थ्यात् "उतश्च प्रत्ययादि"ति हेर्लुगभावे "श्रुश्रृणुपृकृवृभ्यश्छन्दसि" इति सूत्रेण हेर्धिरित्यादेशे "अन्येषामपि" इति दीर्घे 'श्रुणुधी' इति भवति ।

**उरुणस्कृधि** ( १९४३ )—कृधातोः लोटि सिपि हौ "नश्च धातुस्थोरुषुभ्यः" इति सूत्रेण णत्वे "कः करत्०" इत्यादि सूत्रेण विसर्जनीयस्य सत्वे 'श्रुश्रृणुपृकृवृभ्यश्छन्दसि । इति हेर्धौ कृते 'उरुणस्कृधि' इति भवति ।

**ररन्धि** ( १९३५ )—रम्धातोर्लोटि रमेर्व्यत्ययेन परस्मैपदे सिपि तस्य हौ "अङितश्च" इति सूत्रेण हेर्धि रित्यादेशे शपि शपः श्लौ अभ्यासत्वे हलादिः शेषेऽभ्यासदीर्घे 'रारन्धि' अत्र "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलिक्ङिति" इति सूत्रेण मलोपस्तु न हेरङित्त्वात् ।

**अस्मे प्रयन्धि** ( १९३२ )—प्रपूर्वकयम्धातोर्लोटि सिपि "सेर्ह्यपिच्च" इति 'हि' आदेशे शपि छन्दसि पक्षे पित्त्वादङित्त्वे "अङितश्च" इति 'हेर्धि' रित्यादेशे "बहुलं छन्दसि" इति शपो लुकि 'प्रयन्धि' इति भवति ।

**त्मना देवेषु** ( १९२९, ३३ )—आत्मना देवेषु इत्यवस्थायां "मन्त्रेष्वाङ्यादेरात्मनः" इति सूत्रेण आत्मन्शब्दस्यादेराकारस्य लोपे 'त्मना देवेषु' इति भवति ।

**त्वं रजिष्ठमनुनेषि** ( १९४६ )—अत्र प्रयोगांशे ऋजुशब्दादतिशयार्थे इष्ठन्प्रत्ययेऽनुबन्धलोपे टिलोपे 'ऋजिष्ठ' इति जाते विभक्तिकार्ये अत्र छन्दसि "विभाषर्जोश्छन्दसि" इति सूत्रेण ऋजुशब्दस्य ऋतः स्थाने रकारादेशे 'रजिष्ठम्' रकारादेशाभावपक्षे 'ऋजिष्ठम्' इत्युभयरूपं भवति ।

**वास्त्व्यम्** ( १९२९ )—वास्तुनि भवमिति विग्रहे "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि" इति सूत्रेण वास्तुशब्दात् निपातनात् यत् प्रत्यये यणादेशे च विभक्तिकार्ये 'वास्त्व्यम्' इति सिद्धम् ।

इति षष्ठोऽध्यायः

—oo✕oo—

# अथ सप्तमोऽध्यायः

**नेतराच्छन्दसि ( ११३१ )**—इतरशब्दात् परयोः स्वमोरद्डादेशो न स्याच्छन्दसि इत्यर्थः । उदाहरणञ्चात्र 'वार्त्रघ्नमितरम्' इति ।

**वार्त्रघ्नमितरम् ( ११३९ )**—इत्यत्र "अद्ड्डतरादिभ्यः पञ्चभ्यः" इति सूत्रेण स्वमोरद्डादेशे प्राप्ते "नेतराच्छन्दसि" इति तन्निषेधे "अतोम्" इत्यमादेशे पूर्वरूपे 'इतरम्' इति भवति ।

**सुपां सुलुक्० (११४५)**—"सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" इति सूत्रस्वरूपम् । सुपां स्थाने सु–लुक्–पूर्वसवर्ण–आ–आत्–शे–या–डा–ड्या–याच्–आल् एते आदेशाः स्युश्छन्दसि इत्यर्थः । उदाहरणानि च यथा 'ऋजवः सन्तु पन्थाः' अत्र पन्थानः इति प्राप्ते सुः ।

**परमे व्योमन् (११४३)**—अत्र प्रयोगांशे 'व्योमनि' इति प्राप्ते अनेन ङेर्लुकि 'परमे व्योमन्' इति।'धीती मती सुष्टुती' अत्र धीत्या, मत्या सुष्टुत्या' इति प्राप्ते अनेन पूर्वसवर्णदीर्घः । या सुरथा रथीतमोभा देवा दिविस्पृशा। यौ सुरथौ दिविस्पृशौ इति प्राप्ते आ भवति । नताद्ब्राह्मणम् । अत्र नतमिति प्राप्ते आत् । या देव विघ्न तात्वा । अत्र यम् इति प्राप्ते । नयुष्मे वाज–वन्धवः, अस्मे इन्द्राबृहस्पती इत्यादौ युष्मासु, अस्मभ्यम् इति प्राप्ते शे । उरुया धृष्णुया अत्र उरुणा, धृष्णुना इति प्राप्ते या ।

**नाभा पृथिव्याः ( ११३७ )**—अत्र प्रयोगांशे 'नाभौ' इति प्राप्ते अनेन सूत्रेण डा कृते डित्वाट्टिलोपे 'नाभा' इति, लोके 'नाभौ' इति भवति । ता अनुष्ठ्यो-च्यावयतात् । अनुष्ठानमनुष्ठा । व्यवस्थावदङ् आङो ड्या । साधुया । साध्विति प्राप्ते याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् । इत्युदा-हरणानि ।

**ऊर्विया ( ११५१ )**—अत्र ऊरुशब्दात् तृतीयैकवचने टाविभक्तौ नादेशम्बा-धित्वा "इयाडियाजीकाराणामुपसङ्ख्यानम्" इतीयादेशे यणादेशे 'ऊर्विया' इति ऊरुणा इति प्राप्ते । **दृतिं न शुष्कं सरसी शयानम् (ई० ११४१)**–अत्रांशे 'सरसी' अत्र "इयाडियाजीकाराणामुपसङ्ख्यानम्" इति ङेरीकारे 'सरसी' इति 'सरसि' इति प्राप्ते । लोके 'सरसि' भवति । अत्र ङेरीकारे आद्युदात्ते पदे प्राप्ते व्यत्ययेनान्तोदात्तता ।

'प्र बाह्वा सिसृतम्' ( १९४४ )—अत्र तृतीयैकवचने 'प्रबाहुना' इति प्राप्ते "आङ्याजयारामुपसंख्यानम्" इति आङि जातेऽनुबन्धलोपे घिसंज्ञात्वात् "घेर्ङिति" इति सूत्रेण गुणेऽवादेशे 'बाह्वा' इति भवति एवञ्च 'प्रबाह्वा' इति काशिकायां तु प्रबाहुनेति प्राप्ते इत्युक्तं तत्ससासभ्रमादित्यवधेयम् । प्रेति न समस्तं पृथक्स्वरदर्शनात् पदकारैर्विच्छिद्य पाठाच्च । अत आख्यातान्वयीतिध्येयम् ।

वधीं वृत्रम् ( १९२६, ४४ )—अत्र प्रयोगांशे 'वधीम्' अत्र हन्धातोर्लुङि "हनो वध लिङि" 'लुङि च" इति सूत्रेण हनो वधादेशे मिपि च्लौ "च्लेः सिचि" इति सूत्रेण च्लेस्सिजादेशे इचावितौ इटि "तस्थस्थमिपां तान्तन्तामः" इति सूत्रेण मिपोऽमादेशे तस्य "अमो मश्" इति मशादेशे शित्वात्सर्वादेशे "अस्तिसिचोऽपृक्ते" इति सूत्रेण ईटि च स्कारस्येत्संज्ञायां लोपे च "इट ईटि" इति सिचोलुकि "अकः सवर्णेदीर्घः" इति सवर्णदीर्घे "बहुलं छन्दसि" इति सूत्रेणाडागमाभावे 'वधीम्' इति साधुः । मकाराकारस्तूच्चारणार्थः । लोकेतु 'अवधिषम्' इति बोध्यम् ।

लोपस्त आत्मनेपदेषु ( १६३३ )—इति सूत्रस्वरूपम् । आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपः स्यात् इत्यर्थः । देवा अदुह, दक्षिणतः शये । इत्युदाहरणे ।

देवा अदुह ( १९२५ )—दुहधातोर्लुङि तस्य 'झि' रित्यादेशे "आत्मनेपदेष्वनतः" इति सूत्रेणझस्यादादेशेऽडागमे "बहुलं छन्दसि" इति रुडागमेऽनुबन्धलोपे "लोपस्त आत्मनेपदेषु" इति सूत्रेण तकारस्य लोपे ( अकारयोः ) पररूपे 'अदुह' इति । लोके 'अदुहत' इति भवति ।

दक्षिणतः शये ( १९३५ )—अत्र 'शेते' इति प्राप्ते तत्र शेतेघटकतकारस्य "लोपस्त आत्मनेपदेषु" इति सूत्रेण तलोपेऽयादेशे 'शये' इति भवति । लोके तु 'शेते' इति भवति ।

वारयध्वात् ( १९२५ )—वृञ् धातोर्णिच्यनुबन्धलोपे वृद्धौ रपरत्वे वारि इत्यस्य धातुत्वे लोटि तस्य ध्वमादेशे शपि अनुबन्धलोपे गुणेऽयादेशे 'वारयध्वम्' इति जाते "ध्वमो ध्वात्" इति सूत्रेण ध्वमोध्वादादेशे 'वारयध्वात्' इति सिद्धम् । लोके 'वारयध्वम्' इति ।

नूनं कृणुतात् ( १६१८ )—हिंसाकरणार्थकेकारेत्संज्ञक-कृव्धातोः लोटि थप्रत्यये सार्वधातुकत्वे "इदितो नुम् धातोः" इति नुमि उमावितौ "धिन्विकृण्व्योरच"

इति सूत्रेण 'उ' प्रत्यये वकारस्याकारेऽकारस्य लोपे "तस्थस्थमिपां तान्तन्तामः" इति सूत्रेण तादेशेणत्वे 'कृणुत' इति जाते "तस्य तात्" इति सूत्रेण तस्य तात् इत्यादेशे 'नूनं कृणुतात्, इति भवति लोके 'कृणुत' इति भवति ।

**मरुतस्तज्जुजुष्टन** ( १६२७ )—ईकारेत्संज्ञकप्रीतिसेवनार्थकजुषूधातोः लोटि-ध्वमि "तप्तनप्तनथनाश्च" इति सूत्रेण ध्वमित्यस्य तनादेशे व्यत्ययेन परस्मैपदत्वे श्लौ च जाते "श्लौ" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्याससंज्ञायां "हलादिः शेषः" इति सूत्रेणाभ्यासषकारस्य लोपे ष्टुत्वे जुजुष्टन' इति सिद्धम् लोके तु "जुष-ध्वम्' इति भवति ।

**नभो भरन्त एमसि** ( १९३०, ५० )—आङुपसर्गपूर्वक-इण्धातोर्मसि सार्वधातुकत्वे शपि शपो लुकि "इदन्तो मसि" इति सूत्रेण मस इकारान्तावयवे गुणे 'एमसि' इति सिद्धम् लोके तु 'एमः' इति भवति ।

**दिवं सुपर्णो गत्वाय** ( १९२५, २९, ३६, ४३ )—गम्धातोः क्त्वाप्रत्यये "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपे "क्त्वो यक्" इति क्त्वः यगागमेऽनुबन्धलोपे 'गत्वाय' इति भवति लोके 'गत्वा' इति ज्ञेयम् ।

**इष्ट्वीनं देवान्** ( १९३४ )—यज्धातोः क्त्वाप्रत्ययेऽनुबन्धलोपे "वचिस्व-पियजादीनां किति" इति सूत्रेण सम्प्रसारणे षत्वे ष्टुत्वे "इष्ट्वीनमिति च" इति सूत्रेण ईनमन्तादेशे 'इष्ट्वीनम्' इति भवति । 'इष्ट्वा' इति लोके भवति ।

**स्विन्नः स्नात्वी मलादिव** ( १९४४ )—शौचार्थक ष्णाधातोः क्त्वाप्रत्यये "धात्वादेः षः सः" इति सत्वे "निमित्तापाये नैमित्तिकस्याप्यपायः" इति नियम-बलात् णस्य नकारे 'स्नात्वा' इत्यस्याव्ययत्वेऽव्ययत्वात् सुपो लुकि - 'स्नात्वा' अत्र "स्नात्व्यादयश्च" इति सूत्रेणाकारस्य 'ईकारे' 'स्नात्वी' इति। लोके तु 'स्नात्वा' भवति ।

**पीत्वीसोमस्य वावृधे** ( १९३१, ३९ )—पिबतेः क्त्वाप्रत्ययेऽनुबन्धलोपे आर्द्धधातुकत्वे "घुमास्थागापाजहातिसां हलि" इति सूत्रेण पकारोत्तराकार-स्येकारे पीत्वा इति जाते "स्नात्व्यादयश्च" इति सूत्रेणाकारस्येकारे 'पीत्वी' इति लोके 'पीत्वा' इति ।

**देवासः** ( १९, ३३, ५१ )—देवशब्दाज्जसि विभक्तावनुबन्धलोपे "आज्जसेर-

सुक्'' इति सूत्रेणासुगागमे किस्वात् 'आद्यन्तौ टकितौ'' इति सूत्रेणान्त्यादचःपरत्वेऽनुबन्धलोपे पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे 'देवासः' इति । लोके तु देवाः इति भवति ।

**ब्राह्मणासः** ( १६५७ )—ब्राह्मणशब्दात् जसि विभक्तावनुबन्धलोपे ''आज्जसेरसुक्'' इति सूत्रेणासुगागमे किस्वादन्त्यादचः परत्वेऽनुबन्धलोपे पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे 'ब्राह्मणासः' इति । लोके तु 'ब्राह्मणाः' इति भवति ।

''**इन्द्रो दधीचो अस्थभिः** ( १९५० ) अत्र प्रयोगांशे 'अस्थभिः' अत्र अस्थिशब्दात् भिस्विभक्तौ ''छन्दस्यपि दृश्यते'' इति सूत्रेणानङादेशेऽनुबन्धलोपे नकारस्य लोपे 'अस्थभिः' इति भवति लोके 'अस्थिभिः' इति भवति ।

**ततुरिः** ( १९४८, ५२ )—तरतेः ''बहुलं छन्दसि'' इति बलात् ''आदृगमहनजनः किकिनौ लिट् च'' इति किन्प्रत्ययेऽनुबन्धलोपे लिटि ''बहुलंछन्दसि'' इति उत्वे तस्य ''द्विर्वचनेऽचि'' इति स्थानिवद्भावात् 'तृ' इत्येतस्य द्वित्वेऽभ्यासत्वेऽभ्यासकार्ये ( 'उरत् इत्यत्वे रपरत्वे ) लोपे रपरत्वे 'ततुरि' इति जाते सौ रुत्वे विसर्गे 'ततुरिः' इति सिद्धम् ।

**ग्रसितस्कभित०** ( १९३७ )—ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च । इति सूत्रस्वरूपम् । एतेऽष्टादश निपात्यन्ते । क्षमितेः पाठपक्षे तु एकोनविंशतिः । तत्र 'ग्रसु' अदने 'स्कम्भु' 'स्तम्भु' रोधनार्थौ सौत्रौ । एतेषांमुदित्वान्निष्ठायामितिप्रतिषेधे प्राप्ते इण्निपात्यते । युवं शचीभिर्ग्रसितामुञ्चतम् । विस्कभिते अजरे । येन स्वः स्तभितम् । सत्येनोत्तभिता भूमिः । स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य माभूदिति । 'चते' याचने । 'कस' गतौ आभ्यां क्तस्येडभावः । चत्ता इतश्चत्तामुतः । त्रिधाह श्यावमश्विनाविकस्तम् । उत्तानाया हृदयं यद्विकस्तम् । निपातनबहुत्वापेक्षम् सूत्रे बहुवचनंविकस्ता इति तेनैकवचनान्तोऽपि प्रयोगः साधुरेव । 'शसु' हिंसायाम् 'शंसु' स्तुतौ 'शासु' अनुशिष्टौ एभ्यस्तृच इडभावः । एकस्त्वष्टुरश्वस्याविशस्ता । ग्रावग्राभ उत शंस्ता । प्रशास्ता पोता । 'तृ' प्लवनतरणयोः । 'वृङ्' संभक्तौ । 'वृञ्' वरणे । एभ्यस्तृच उट् ऊट् एतावागमौ निपात्येते । तरुतारं रथानाम् । तरूतारम् । वरुतारम् वरूतारम् । वरूत्रीभिः सुशरणो नो अस्तु । अत्र ङीबन्तनिपातनं प्रपञ्चार्थम् । वरूतृशब्दो हि निपातितः । ततो ङीपा गतार्थत्वात् ।

उज्ज्वलादिभ्यश्चतुर्भ्यः शपः इकारादेशो निपात्यते। 'ज्वल' दीप्तौ 'क्षर' संचलने। 'टुवम्' उद्गिरणे 'अम्' गत्यादिषु। इह क्षरितीत्यस्याऽनन्तरं क्षमितीत्यपि केचित् पठन्ति। तत्र 'क्षमूष्' सहने इति धातुर्बोध्यः। भाषायां तु ग्रस्तस्कब्धस्तब्धोत्तब्ध-चत्तितविकसिताः। विशसिता। शंसिता। शासिता। तरिता। तरीता। वरिता। वरीता। उज्ज्वलति। क्षरति। पाठान्तरे क्षमति। वमति। अमति। इति शम्।

**सत्येनोत्तभिता भूमिः (१६४६)**—अत्र प्रयोगांशे 'उत्तभिता' अत्र उत्पूर्व कोकारेत्संज्ञकस्तम्भधातोः निष्ठायां क्तप्रत्ययेऽनुबन्धलोपे "उदितो वा" इति क्त्वार्थो वेट्त्वात् "यस्य विभाषा" इतीण्निषेधे प्राप्ते "ग्रसितस्कभितस्तभितोत्तभितचत्तविक-स्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च" इति सूत्रेण निपातनात् इडागमेऽनुबन्धलोपे सन्धिकार्ये (परसवर्णादिकार्ये) टापि 'उत्तभिता' इति भवति। अत्र सूत्रे (ग्रसित०) स्तभितेत्येव सिद्धे उत्पूर्वस्य पुन-र्निपातनमन्योपसर्गपूर्वस्य स्तभितेः मा भूदिति ज्ञापनार्थम्।

**प्रमिणन्ति व्रतानि (१९३६)**—मीनातेर्लटि झिप्रत्यये झेरन्तादेशे "हिनु-मीना" इति णत्वे "मीनातेर्निगमे" इति सूत्रेण ह्रस्वे णत्वे 'प्रमिणन्ति' इति सिद्धम् लोके तु 'प्रमीणन्ति' इति भवति।

**सर्वमा इदम् (१९४२)**—असधातोर्लङि तिपि शपि शपोलुकि "आडजा-दीनाम्" इति सूत्रेणाटि "आटश्च" इति सूत्रेण वृद्धौ "इतश्च" इतीकारलोपे "अस्ति-सिचोऽपृक्ते" इतीडागमे प्राप्ते "बहुलं छन्दसि" इतीडभावेऽपृक्तत्वाद्धल्ङ्यादिलोपे आ + स् इदम् इति जाते सस्य रुत्वे विसर्गे संहितायां "भोभगो०" इति रोर्यत्वे "लोपः शाकल्यस्य" इति यलोपे 'आ इदम्' इति एवम् सर्वमा इदम् इति भवति लोके तु 'आसीत्' इति भवति।

**आनुषग्जुजोषत् (१९३०)**—प्रीतिसेवनार्थक-ईकारेत्संज्ञकजुष्धातोर्लेटि व्यत्य-येन परस्मैपदे तिपि "इतश्च लोपः परस्मैपदेषु" इतीकारस्य लोपे "लेटोऽडाटौ" इत्यटि व्यत्ययेन शपः श्लौ "श्लौ" इति सूत्रेण द्वित्वे अभ्यासकार्ये लघूपधगुणस्य "नाभ्य स्तस्याचिपिति सार्वधातुके" इति सूत्रेण निषेधे प्राप्ते "नाभ्यस्तस्याचीति निषेधे बहुलं छन्दसीति वक्तव्यम्" इति लघूपधगुणे 'जुजोषत्' इति भवति। लोके लेट्-लकारो न भवति लोटि 'जुषताम्' इति भवति।

**नित्यं छन्दसि इत्यनेन किं भवति ( १९४२ )**—अनेन सूत्रेण छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यं भवति।

**अवीवृधत् ( १९५२ )**—भाषार्थकोकारेत्संज्ञकणिजन्तवृधधातोर्लुङि तिपि च्लौ च्लेश्चङि द्वित्वेऽभ्यासत्वे "उरत्" इत्यत्वे रपरत्वे हलादिः शेषे अडागमेऽनुबन्धलोपे अभ्यासस्येत्वे दीर्घे "इतश्च" इतीकारलोपे "नित्यं छन्दसि" इति सूत्रेण चङ्युपधाया ऋवर्णस्य नित्यं 'ऋत्' इत्यादेशे तेन गुणाभावे 'अवीवृधत्' इति भवति।

**जनीयन्तोन्वग्रवः ( १९४० )**—जनमिच्छन्त इति विग्रहे क्यचि प्रत्ययेऽनुबन्धलोपे "अपुत्रादीनामिति वाच्यम्" इति बलात् "क्यचि च" इति सूत्रेणावर्णस्येकारे लटि लटः शत्रादेशे जसि विभक्तिकार्ये 'जनीयन्तः' इति भवति।

**अश्वायन्तो मघवन् ( १९३२ )**—अश्वशब्दात् क्यच्यनुबन्धलोपे "अश्वाघस्यात्" इति सूत्रेणात्त्वादेशे 'अश्वाय' इति जाते लटि लटः स्थाने शत्रादेशे अनुबन्धलोपे जसि विभक्तिकार्ये 'अश्वायन्तः' इति सिद्धम्।

**वृका अघायवः ( १९२७ )**—अघशब्दात् "छन्दसि परेच्छायां क्यच्" इति सूत्रेण क्यचि प्रत्ययेऽनुबन्धलोपे "क्याच्छन्दसि" इति सूत्रेण क्यजन्तात् उप्रत्यये सति दीर्घे प्राप्ते "न छन्दसि" इति निषेधे "अश्वाघस्यात्" इति सूत्रेण घोत्तरवर्तिनोऽकारस्याऽऽति निष्पन्नादघायुशब्दाज्जसि विभक्तिकार्ये 'अघायवः' इति सिद्ध्यति।

**अकृत्सार्वधातुकयोर्दीर्घः इत्यनेनैव दीर्घे सिद्धे 'अश्वाघस्यात्' इत्यस्य फलम् ( १९४० )**—ननु 'अश्वायन्तो मघवन्' 'मा त्वा वृकाअघायवः' इत्यादौ "अकृत्सार्वधातुकयोर्दीर्घः" इत्यनेन दीर्घेणैव सिद्धे "अश्वाघस्यात्" इति सूत्रं व्यर्थमिति चेन्न "न छन्दसि" इति निषेधो नेत्वमात्रस्य किन्तु दीर्घस्यापीति ज्ञापनेन 'अश्वायन्तो मघवन्' 'मात्वा वृका अघायवः' इत्यादीनां सिद्ध्येऽस्य ( अश्वाघस्यात् इत्यस्य ) आवश्यकत्वात्।

**देवसुम्नयोर्यजुषि काठके ( १९४१ )**—इति सूत्रस्वरूपम् अनयोः ( देवसुम्नयोः ) क्यचि आत् स्याद्यजुषि कठशाखायाम्। इति वाक्यार्थः।

**कव्यध्वरपृतनस्यर्चिलोपः ( १९४५ )**—इति सूत्रस्वरूपम्। कवि-अध्वर-पृतना एषामन्त्यस्य लोपः स्यात् क्यचि परे ऋचि विषये। इति व्याख्यार्थः।

सपूर्वया निविदा कव्यतायोः। अध्वर्युं वा मधुपाणिम्। दमयन्तं पृतन्युम्। इत्युदाहरणानि।

**गर्भं माता सुधितं वक्षणासु ( १९४२ )**-सुपूर्वकदधातेः क्तप्रत्ययेऽनुबन्धलोपे "सुधित वसुधित नेमधित धिष्व धिषीय च" इति सूत्रेण निपातनात् आकारस्येत्वे विभक्तिकार्ये 'सुधितम्' इति भवति।

**धिष्व वज्रम् ( १९२६ )**—धाधातोः लोटि थासि सार्वधातुकत्वे "थासः से" इति सूत्रेण थासः से आदेशे "सुधित वसुधित नेमधित धिष्व धिषीय च" इति सूत्रेण धकारोत्तराकारस्येत्वे "सवाभ्यां वामौ" इति वकारादेशे "आदेशप्रत्यययोः" इति सूत्रेण षत्वे 'धिष्व' इति। लोके तु 'धत्स्व' इति भवति।

**दाधर्ति० ( १९३९-५२ )**—दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्याऽऽगनीगन्तीति च" एते दाधर्तिप्रभृतयः अष्टादश छन्दसि निपात्यन्ते। तत्र यथा आद्यास्त्रयः ( दाधर्ति दर्धर्ति दर्धर्षि ) अनवस्थानार्थकधृञो धारयतेर्वा ( णिजन्तस्य धृञो वा ) रूपम्। तत्र-अतिसङ्क्षेपपुरस्सरं लिख्यते—दाधर्तीत्यत्र धारयतेर्लटि शपि शपः श्लौ णिलुकि अभ्यासकार्ये अभ्यासस्य दीर्घत्वं च निपात्यते। धृञो वा शे प्राप्ते व्यत्ययेन शप् तस्य श्लावभ्यासस्य दीर्घत्वं च निपात्यते अत्र परस्मैपदमपि निपात्य तस्यैव यङ्लुक्यभ्यासस्य रुगाद्यपवादकं दीर्घत्वं निपात्यते इति। दर्धर्तीत्यत्र—यङ्लुक्पक्षे दाधर्तीति निपातनेन प्राप्तस्य दीर्घस्याभावो निपात्यते। "रुग्रिकौ च लुकि" "ऋतश्च" इत्येव रुक् सिद्धः। श्लुपक्षे तु रुगपि निपात्यः। दर्धर्षीत्यत्र यङ्लुक्पक्षे न किञ्चिन्निपातनं किंतु श्लावेव। भवतेर्यङ्लुगन्तात् लोटि तिबादिकार्ये निपातनात् यङ्लुगन्तस्य गुणाऽभावे बोभूतु इति। ( भाषायां तेन गुणो लभ्यते ) ननु "भुसुवोस्तिङि" इत्येव गुणनिषेधे निपातनमनर्थकमिति चेत्सत्यम्। ज्ञापकार्थं तर्हि निपातनम्। एतज्ज्ञापयति अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति तेन 'बोभवीति' इत्यत्र भाषायां गुणः सिद्धस्तदेतदाह—तेनभाषायां गुणो लभ्यते इति। तिजेर्यङ्लुगन्तात्तङ्निपात्यते शेषं कार्यं पूर्ववत् 'तेतिक्ते' इति।

**'अलर्षि' युध्म खजकृत्पुरन्दर इति। ( १९४७ )** अलर्षि 'ऋ' गतौ लटि सिपि शपि श्लौ 'श्लौ' इति द्वित्वेऽभ्यासत्वे अभ्यासस्य हलादिः शेषापवादो रेफस्य लत्वं निपात्यते। "अर्तिपिपर्त्योश्च" इत्यभ्यासस्य प्राप्तस्येत्वस्याभावो निपात्यते।

अलर्तिदक्षउत ( १९५० )–इदमपि अलर्षिवत् बोध्यम्। केवलं तिपि रूपमिदं भवति इति विशेषः। सिपा निर्देशो न तन्त्रम्। फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते 'अन्वापनीफणत्'। स्यन्देः सम्पूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् धातुसकारस्य षत्वम्। करोतेर्यङ्लुगन्तस्याभ्यासस्यचुत्वाभावः। 'करिक्रत्' इति।

कनिक्रदज्जनुषम् ( १९३० )–'कनिक्रदत्' अत्र दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते० इत्यादिसूत्रेण कनिक्रदत् इति निपातनात् क्रन्देर्लुङि तिपि च्लौ च्लेरङि द्विर्वचनेऽभ्यासकार्ये "कुहोश्चु०" इति सूत्रेण प्राप्तस्याभ्यासस्य चुत्वस्याभावे 'इतश्च' इतीकारलोपे निगागमेऽनुबन्धलोपे नकारलोपे च कनिक्रदत् इति ततः संहितायां श्चुत्वे 'कनिक्रदज्जनुषम्' इति भवति। लोके तु 'अक्रन्दीत्' इति। बिभर्तेरभ्यासस्य जश्त्वाभावः। वि यो भरिभ्रदोषधीषु।

दविध्वतो रश्मयः सूर्यस्य ( १९२८ )—अत्र प्रयोगांशे 'दविध्वतः' इत्यत्र "दाधर्ति०" इत्यादिना यङ्लुगन्तशत्रन्तध्वरतेरभ्यासस्य निपातनात् विगागमे धातोर्ऋकारलोपे च 'दविध्वत्' शब्दस्य 'दविध्वतः' इति भवति। शत्रन्तावस्थायां नुम् तु न भवति "नाभ्यस्ताच्छतुः" इति निषेधात्।

द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावोऽत्वं विगागमश्च निपात्यते तेन दविद्युतत् दिद्यच्छोशुचानः। तरतेः शतरि श्लौ अभ्यासस्य रिगागमः। सहोर्जा तरित्रतः। सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य। वृजेः शतरि श्लावभ्यासस्य रीक्। मृजेर्लिटि णल् अभ्यासस्य रुक् धातोश्चयुक्।

वद्यन्ती वेदागनीगन्ति कर्णम् ( १९४६ ) अत्र प्रयोगांशे गमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते।

अलर्षि युध्म खजकृत्पुरन्दरः। ( १९४७ )
अलर्ति दक्ष उत। ( १९५० )
कनिक्रदज्जनुषम्। ( १९३० )
दविध्वतो रश्मयः सूर्यस्य। ( १९२८ )
वद्यन्ती वेदागनीगन्ति कर्णम्। ( १९४६ )
एते सर्वे प्रयोगाः 'दाधर्ति' सूत्रस्थप्रयोगसाधनावसरे साधिताः द्रष्टव्याश्च ते।

गृष्टिः ससूव स्थविरम् ( १९३७ ) सूतेर्लिटि "ससूवेति निगमे" इति सूत्रे

'ससूव' इति पाठात् निपातनात् परस्मैपदे तिपि णलादेशेऽनुबन्धलोपे द्वित्वे अभ्यासत्वे निपातनादेव वुगागमेऽभ्यासस्यात्वे 'ससूव' इति। लोके तु 'सुषुवे' इति भवति।

**पूर्णां विवष्टि**—( १९४९ ) कान्त्यर्थकवशधातोर्लटि तिपि शपि शपः श्लौ द्वित्वे "बहुलं छन्दसि" इत्यभ्यासस्येत्वे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन षत्वे ष्टुत्वे 'विवष्टि' इति भवति।

इति सप्तमोऽध्यायः



## अथ अष्टमोऽध्यायः

**प्रप्रायमग्निः** ( १९२७ ) अत्र प्रयोगांशे "प्रसमुपोदः पादपूरणे" इति सूत्रेण द्वित्वे 'प्रप्रायमग्निः' इति भवति। एवंविधस्य भाषायां प्रयोगो नास्तीति छन्दस्येवेदं विधानम्।

**अक्षण्वन्तः** ( १९४६-५० ) अक्षिशब्दान्मतुपि "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" "छन्दस्यपि दृश्यते" इत्यनङि नुटोऽसिद्धत्वात् पूर्वं नलोपे भूतपूर्वगत्या 'अनो नुट्" इति नुटि उटावितौ णत्वे वत्वे जसि रूपम्। ननु यदि परादिर्नुट् क्रियते तस्य मतुप्ग्रहणेन ग्रहणात् "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति वत्वं मतुपस्तु न स्यात् नुटा व्यवधानात्। यदि तु पूर्वान्तो नुट् क्रियते तर्हि णत्वं न स्यात्। 'पदान्तस्य' इति निषेधादिति चेत्सत्यम्। नुटोऽसिद्धत्वान्नोक्तदोषः। नन्वेवमवग्रहे दोषः स्यात्, अक्षणिति णान्तं ह्यवगृह्णाति अक्षेत्यकारान्तमवग्रहीतुमुचितमिति चेत्सत्यम्, न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नामलक्षणमनुवर्तनीयं तस्माद्यथालक्षणं पदं कर्तव्यमिति महाभाष्ये स्थितम्। किं च ईयिवांसम् इत्यादौ पदत्वं विनापि अवग्रहः क्रियते। पूर्वेभिरग्निनेत्यादौ सत्यपि पदत्वे न क्रियते इति।

**नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि"** ( १९४६ ) एतानि छन्दसि निपात्यन्ते। सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वाभावो निपात्यते। नसत्तमञ्जसा, निषत्तमस्य चरतः। उन्देर्नञ्पूर्वस्यानुत्तम् निपातनात् भवति। प्रतूर्तमिति त्वरतेः तुर्वीत्यस्य वा। सूर्तमिति 'सृ' इत्यस्य। गूर्तम्—इति गूरी इत्यस्य। एतानि उदाहरणानि सन्ति।

**निषत्तमस्य चरतः** ( १९२९ ) निपूर्वकलृकारेत्संज्ञकषद्धातोः "धात्वादेः षः सः" इति सूत्रेण सकारे निष्ठासंज्ञकक्तप्रत्ययेऽनुबन्धलोपे "सदिरप्रतेः" इति

सूत्रेण सकारस्य षत्वे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठातकारस्य नत्वे प्राप्ते "नसत्तनिषत्ताऽनुत्तप्रतूर्तसूर्तगूर्तानिच्छन्दसि" इति सूत्रेण निपातनात् नत्वाभावे चर्त्वे विभक्तिकार्ये 'निषत्तम्' इति भवति। एवञ्च 'निषत्तमस्य चरतः' इति भवति।

भुवरिति (१९२९) अत्र "भुवश्च महाव्याहृतेः" इति भुवसः सकारस्य रेफे भुवरिति रुत्वपक्षे भुव इति भवति।

ये ३ यजामहे (१९४७) अत्रांशे ये अत्र "ये यज्ञकर्मणि" इति सूत्रेण ये इत्यस्य प्लुते जाते 'ये३यजामहे' इति भवति।

अग्निमा ३ वह (१९५०) अत्रांशे "ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" इति सूत्रेणावहादेः प्लुते जाते 'अग्निमा ३ वह' इति भवति।

अग्नीत्प्रेषणेपरस्य च (१९४२) अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात् परस्य च प्लुत इत्यर्थः।

अद्यामावास्येत्यात्थ ३ (१९४०) अत्र प्रयोगे "निगृह्याऽनुयोगे च" इति सूत्रेण वाक्यस्य टेः प्लुतत्वे "अद्यामावास्येत्यात्थ ३" इति भवति।

अङ्गयुक्तं तिङाकाङ्क्षम् (१९४६) इति सूत्रस्वरूपम्। अङ्गेत्यनेन युक्तं तिङन्तं तिङ्प्रत्ययान्तमित्यर्थः प्लवते प्लुततामाप्नोति प्लुतो भवतीत्यर्थः। अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म। इत्यादि।

प्रतिश्रवणे च (१९४६) इति सूत्रस्वरूपम्। वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च इति व्याख्यार्थः। गां मे देहि भोः। हन्त ते ददामि ३। नित्यः शब्दो भवितुमर्हति ३। दत्त किमात्थ ३। इत्युदाहरणानि।

हन्त ददामि ३ (१९४२-४७) अत्र "प्रतिश्रवणे च" इति सूत्रेण वाक्यस्य टेः प्लुते जाते 'हन्त ते ददामि ३' इति भवति।

अग्निचिद्भाया३त् (१९४०) अत्र "चिदिति चोपमार्थे प्रयुज्यमाने" इति सूत्रेण प्लुते 'अग्निचिद् भाया ३ त्' इति।

अधः स्विदासीत् (१९३८) अत्र "विचार्यमाणानाम्" इति विहितप्लुतस्य "उपरिस्विदासीदिति च" इति सूत्रेणानुदात्तत्वे 'अधः स्विदासी ३ त् इति भवति।

अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम् (१९४६) अत्र

"स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु" इति सूत्रेण स्वरितस्य प्लुतत्वे 'अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम्' इति भवति ।

**क्रियाशीःप्रैषेषु तिङाकाङ्क्षम्** इति सूत्रस्वरूपम् । आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् इत्यर्थः ।

**प्लुतावैच इदुतौ ( १९२९ )** इति सूत्रस्वरूपम् । दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते, इत्यर्थः । ऐ ३ तिकायन । औ ३ पगव । इत्युदाहरणे ।

**अग्ना ३ इ पत्नीवः ( १९२८ )** अत्र प्रयोगे "आमन्त्रिते छन्दसि प्लुतविकारोयं वक्तव्यः" इत्यनेन प्लुतविकारे अग्ना ३ इ पत्नीवः इति भवति ।

**तयोर्य्वावचि संहितायाम् ( १९३९ )** इदुतोर्यकारवकारौ स्तोऽचि संहितायामित्यर्थः ।

**अग्ना ३ यिन्द्रम् ( १९४७ )** अत्र "तयोर्य्वावचि संहितायाम्" इति सूत्रेणेकारस्य यकारे 'अग्ना ३ यिन्द्रम्' इति भवति ।

**तयोर्य्वावचिसूत्रारम्भप्रयोजनम् ( १९२६, ३९, ४१, ४३, ४५ )** ननु "इको यणचि" इत्यनेनैव सिद्धे लक्ष्ये "तयोर्य्वावचि संहितायाम्" इति सूत्रं व्यर्थमिति चेन्न इदुतोरसिद्धत्वेनास्यावश्यकत्वात् । न च 'सिद्धः प्लुतः स्वरसन्धिषु' कथं ज्ञायते प्लुतप्रगृह्या अचीति प्रकृतिभावविधानात् । यस्य हि विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः प्लुतस्यासिद्धत्वेन तस्य स्वरसन्ध्याख्यो विकारः प्राप्नोति । अस्तु प्लुतः सिद्धः कियातमिदुतोः ? उच्यते—प्लुतप्रकरणे यत्कार्यं तत् स्वरसन्धिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशः किमर्थमिदमिति वाच्यम् सवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थमस्यावश्यकत्वात् । यदीदं नोच्येत अग्ना ३ इ इन्द्रम्, पटा ३ उ उदकम् इत्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घः स्यात् । अग्ना ३ याशेत्यादौ च "इको सवर्णे शाकल्यस्य ह्रस्वश्च" इति प्रकृतिभावः स्यात्तद्बाधनार्थमिदं वक्तव्यमेव । ननु च तन्निवृत्तये यत्नान्तरमस्ति किं पुनस्तत्प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्त्यर्थः शाकलनिवृत्त्यर्थश्च तच्चावश्यं वक्तव्यं य इक् प्लुतपूर्वः न च प्लुतविकारः भो ३ इ इन्द्र भोयिन्द्र गायतीति भोशब्दस्य छान्दसः प्लुतः ततः परस्येकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते तम्प्रबाध्य यणादेशार्थं तस्यावश्यं कर्तव्यत्वे तेनैव

यणा सिद्धे पुनरपि व्यर्थमेवेति चेन्न यवयोरसिद्धत्वादुदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्य बाधनार्थमस्याऽवश्यकत्वात् ।

तथा चोक्तं वृत्तिकृता—

किन्तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति ॥
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ॥१॥
इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ॥
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः ॥ २ ॥

अस्यायमर्थः—"इकोयणचि" इति यणादेशेन किं रूपं नसिद्धयति यतोऽयमाचार्य्य इदुतोर्य्वौ विदधाति तौ चेदिदुतौ स्वरसन्धिषु सिद्धौ ममेति सूत्रकारेणैकीभूतस्य वचनम् । एवञ्चोदिते परिहरति—"शाकलदीर्घविधौ तु निवर्त्यौ" इति पुनश्चोदयति इक् च यदेति वार्तिककारोऽपि इकः प्लुतपूर्वस्य यणं विदधाति स च प्रकृतिभावस्यैव शाकलदीर्घविध्योरपि अपवादः । ततश्च तेनैव यणा एतयोरपि इदुतोः शाकलदीर्घौ न भविष्यत इति नार्थ एतेन । परिहरति 'यण्स्वरेति' यण्स्वरबाधनमेव हेतुः सूत्रारम्भस्येति दिक् ।

**मतुवसो रु सम्बुद्धौ छन्दसि ।** ( १९३७ ) मत्वन्तस्य वस्वन्तस्य च रुः स्यात् सम्बुद्धौ छन्दसि विषये इत्यर्थः । इन्द्र मरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । इत्युदाहरणे ।

**'हरिवो मेदिनं त्वा** ( १९२९, ३२, ४३, ४८ )—हरयो विद्यन्ते यस्येति विग्रहे "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुपि अनुबन्धलोपे "छन्दसीरः" इति मकारस्य वकारे हरिवच्छब्दात् सम्बुद्धयेकवचने सौ "उगिदचां सर्वनामस्थानेऽधातोः" इति सूत्रेण नुमि उमावितौ "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इति सूत्रेण सुलोपे संयोगान्तलोपे च कृते "अलोन्त्यस्य" इति परिभाषाबलात् "मतुवसो रु सम्बुद्धौ छन्दसि" इति सूत्रेण नकारस्य रुत्वे "संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्य" इति बलात् "हशि च" इत्युत्वे गुणे च 'हरिवो' इति एवञ्च 'हरिवो मेदिनं त्वा' इति भवति ।

**दाश्वान् साह्वान् मीढ्वांश्च** ( १४४६ )—इति सूत्रस्वरूपम् । एते प्रयोगाः ( दाश्वान् साह्वान्, मीढ्वान्, एते ) क्वसु प्रत्ययान्ताः निपात्यन्ते । उदाहरणं तु स्पष्टमेव ।

**पशूंस्तांश्चक्रे** ( १९५० ) पशून् तानिति स्थिते "नश्छव्यप्रशान्" इति सूत्रेण

नित्ये रुत्वे प्राप्ते तम्प्रबाध्य "उभयथर्क्षु" इति सूत्रेण विभाषा रुत्वे पूर्वत्र "अत्राऽनुनासिकः पूर्वस्य तु वा" इति वानुनासिके उत्तरत्र अनुनासिके च रेफस्य विसर्गे सत्वे 'पशूंस्ताश्चक्रे" इति भवति।

महाँ इन्द्रो य ओजसा (१२४६, ४७) अत्रांशे 'महान्' अत्रत्यनकारस्य रुत्वे यत्वे लोपे "आतोऽटि नित्यम्" इति नित्यमनुनासिके 'महाँ इन्द्रो य ओजसा' इति भवति।

आतोऽटि नित्यम् (१९२५) अटि परतो रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः स्यात्। 'महाँ इन्द्रः' इत्यत्र रोः पूर्वस्यातः स्थानेऽनुनासिकः। तैत्तरीयाणां मते तु सूत्रफलं चिन्त्यम्।

छन्दसि वाऽप्राम्रेडितयोः (१९२५) 'अग्ने त्रातर्ऋतस्कविः' गिरिर्न विश्वतस्पृथुः अत्र विसर्गस्य सकारादेशः।

सुपेशस्करति (१९४६) अत्र "कः करत्करतिकृधिकृतेष्वनदितेः" इति सूत्रेण 'सुपेशः करति अत्रत्यविसर्गस्य सत्वे 'सुपेशस्करति' इति सिद्धम्।

दिवस्पातु (१९५२) अत्र पञ्चमीसमासे 'पातौ च बहुलम्" इति सूत्रेण च 'दिवः पातु अत्रत्यविसर्गस्यसकारे 'दिवस्पातु' इति भवति।

तमसस्पारमस्य (१९३८) अत्र षष्ठीसमासे "तत्पुरुषे कृति" इत्यलुकि रुत्वे विसर्गे "षष्ठयाः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" इति सूत्रेण षष्ठीविसर्गस्य सादेशे "तमसस्पारमस्य" इति सिद्धम्।

रायस्पोषं यजमानेषु (१९४१) अत्रापि पूर्ववत् षष्ठीसमासेऽलुकि रुत्वे विसर्गे "षष्ठयाः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" इति षष्ठीविसर्गस्य पोषे परे सकारे "रायस्पोषम्' इति एवञ्च 'रायस्पोषं यजमानेषु' इति भवति।

निसस्तपतावनासेवने (१९२५) निसः सकारस्य मूर्द्धन्यः स्यात्। निष्टप्तं रक्षो निष्टप्ता अरातयः। अत्र सकारस्य मूर्द्धन्यादेशः।

त्रिभिष्ट्वं देव सवितः (१९२७) एतद्वाक्यघटक'त्रिभिष्ट्वम्' इत्यत्र 'त्रिभिः त्वम्' इति स्थिते सत्वे "युष्मत्तत्ततक्षुष्वन्तःपादम्" इति सूत्रेण सस्य मूर्धन्यादेशे "ष्टुना ष्टुः" इति ष्टुत्वे 'त्रिभिष्ट्वम्' इति भवति। एवञ्च 'त्रिभिष्ट्वं देव सवितः' इति भवति।

तेभिष्ट्वा (१९५१) एवमेव कार्ये जाते तेभिः त्वा इति स्थिते सत्वे "युष्मत्तत्ततक्षुष्वन्तः पादम्" इति सस्य षत्वे ष्टुत्वे 'तेभिष्ट्वा' इति भवति।

**अप्स्वग्ने सधिष्टव** ( १९४२ ) अत्रांशे च पूर्ववत् 'सधिः तव इति स्थिते सत्वे सस्य "युष्मत्तत्ततक्षुष्वन्तः पादम्" इति सूत्रेण सस्य षत्वे ष्टुत्वे 'सधिष्टव' इति एवञ्च अप्स्वग्ने 'सधिष्टव' इति भवति ।

**व्यसीदत्** ( ११९२६ ) विपूर्वकऌकारेत्संज्ञक—षद्धातोः "धात्वादेः षः सः" इति सूत्रेण सत्वे लङि तिपि शपि प्राप्ते तम्प्रबाध्य "तुदादिभ्यः शः" इति शेऽनुबन्धलोपे सार्वधातुकत्वे "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति सूत्रेण सीदादेशे "लुङ्लङ्लृङ्क्ष्वडुदात्तः इति सूत्रेणाडागमे यणादेशे "इतश्च" इतीकारस्य लोपे "सदिरप्रतेः" इति नित्यमूर्द्धन्यादेशे प्राप्ते तम्प्रबाध्य "निव्यभिभ्योऽड्व्यवाये वा छन्दसि" इति वैकल्पिकमूर्द्धन्या देशे 'व्यषीदत्' इति मूर्द्धन्याभावपक्षे 'व्यसीदत्' इति सिद्धम् । लोके तु 'व्यषीदत्' इत्येकमेव रूपं भवति ।

**अभ्यष्टौत्** ( १९५१ ) स्तुत्यर्थकष्टुधातोः "धात्वादेः षः सः" इति सत्वे "निमित्तापाये नैमित्तिकस्याऽप्यपायः" इति न्यायेन तकारे 'स्तु' इति जाते लङि तिपि शपि शपो लुकि अडागमे 'इतश्च' इतीकारलोपे "उतोवृद्धिर्लुकि हलि" इति वृद्धौ "निव्यभिभ्योऽड्व्यवाये छन्दसि" इति सस्य षत्वे ष्टुत्वे 'अभ्यष्टौत्' इति भवति । मूर्द्धन्याऽभावपक्षे 'अभ्यस्तौत्' इति भवति ।

**नृमणः** (१९४०) अत्र प्रयोगे "छन्दस्यृदवग्रहात्" इति सूत्रेण णत्वे 'नृमणः' इति भवति ।

**पितृयाणम्** ( १९३८–४४ ) अत्रापि "छन्दस्यृदवग्रहात्" इति सूत्रेण णत्वे 'पितृयाणम्' इति सिद्धम् ।

**अभीषु णः** ( १९४७–५० ) अत्र प्रयोगांशे अस्मदादेशस्य नस् इति स्थिते "इकः सुञि" इति सूत्रेण दीर्घे नस् अत्रत्यनकारस्य "नश्च धातुस्थोरुषुभ्यः" इति णत्वे विसर्गे 'अभीषु णः' इति भवति ।

**मो षु णः** ( १९३५ ) अत्र प्रयोगे अस्मदादेशस्य नसित्यत्रत्यनकारस्य नश्च धातुस्थोरुषुभ्यः इति सूत्रेण णकारे सकारस्य रुत्वे विसर्गे च 'मो षु णः' इति सिद्धम् ।

इत्यष्टमोऽध्यायः ॥

इति वैदिकी प्रक्रिया समाप्ता ।



# अथ स्वरप्रकरणम्

## तत्र प्रथमं साधारणस्वरः

गोपायतं नः ( १९४४-४७ )—

'गुप्' इत्यस्य "धातोः" इत्यन्तोदात्ते तत आयप्रत्यये "आद्युदात्तश्च" इति प्रत्ययस्वरेणाद्युदात्ते ततः "सनाद्यन्ताधातवः" इति सूत्रेण धातुसंज्ञायां "धातोः" इति यकाराकारस्योदात्ते, प्रागुक्तयोरुदात्तयोः सतोः पश्चात् प्रवृत्तत्वात् सति शिष्टः स यकाराकार एवोदात्तः, अतोऽयमेव बलवान्। तस्य "अनुदात्तौ सुप्पितौ" इति सूत्रेण कृतानुदात्तेन शबकारेण सह "अतो गुणे" इति पररूपे कृते "एकादेश उदात्तेनोदात्तः" इत्युदात्ते थसस्तमादेशे तस्य "तास्यनुदात्तेन्ङिदुपदेशात्०" इत्यनेनादुपदेशात् परत्वादनुदात्तत्वम्। तस्य च "उदात्तादनुदात्तस्य स्वरितः" इति स्वरिते, 'स्वरितात्संहितायाम्' इति नकारस्य एकश्रुतौ 'गोपायतं नः' इति। नन्वत्र तमिति स्वरितमाश्रित्य "अनुदात्तं पदमेकवर्जम्" इति परिभाषया शेषनिघातः स्यादिति चेन्मैवम्। यथोद्देशपक्षाश्रयणेनेयं परिभाषा त्रिपाद्यां न प्रवर्तते इत्यत्र ज्ञापकं तव्यतस्तित्वं "यतोऽनावः" इति च।

सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम् ( २६, २८, ३०, ४०, ४३, ४९ )—

सति शिष्टेति—यो हि यस्मिन् सति शिष्यते स शिष्टः तस्य बाधको भवतीत्यर्थः। एतच्च सति शिष्टस्य बाधकत्वं न्यायसिद्धम्। तथा हि उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते तत्रोत्सर्गस्यापवादस्य वा चरमा या प्राप्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते। तद्यथा-औपगवत्वमित्यत्राण्प्रत्यये त्वप्रत्यये च "आद्युदात्तश्च" इति प्रवर्तमानं स्वस्यैव प्रथमप्रवृत्तिं बाधते द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीतिदिक् "गोपायतं नः" उदाहरणम्। ननु यदि सति शिष्टः स्वरो बलीयांस्तर्हि सति शिष्टत्वात् विकरणस्वरोऽपि बलीयान् स्यात् तथा च 'गृणीत' इत्यादि मध्योदात्तं पदं स्यादत आह-अन्यत्र विकरणेभ्य इति। सति शिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधते इत्यर्थः। अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्यानुदात्तविधानम्। तथाहि यद्यपि लावस्थायां तासिर्विधीयतेतथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु परेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सति शिष्टत्वात् शेषनिघातेनैव सिद्धेरनर्थकं तत्स्यात्। इति शम्।

देवीं वाचम् ( १९२५, ३६, ४१, ४७ ) देवशब्दस्याच्प्रत्ययान्तत्वात् "चितः" सूत्रेणान्तोदात्तत्वे पचादिषु 'देवट्' इति पाठात् "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति सूत्रेण ङीपि तस्य "अनुदात्तौ सुप्पितौ" इति सूत्रेणानुदात्तत्वे "यस्येति च" इति सूत्रेणाकारस्य लोपे "अनुदात्तस्य च यत्रोदात्तलोपः" इति सूत्रेण ङीबुदात्तः । ननु "अनुदात्तस्य च यत्रोदात्तलोपः" इति सूत्रे अनुदात्तस्येति व्यर्थम् नह्युदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति । न च प्रसज्यते इति प्रासङ्गः अत्र कर्मणि घञ् "कर्षात्वतो घञोऽन्त उदात्तः" इत्यन्तोदात्तत्वे "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्युपसर्गस्य दीर्घे तं वहतीति "प्राग्घितद्यत्" इति सूत्रेण यति तित्वात्स्वरिते तस्मिन् परे "यस्येति च" इति लोपः । एवञ्चात्र स्वरिते परे उदात्तलोपोऽस्त्येवेति वाच्यम् स्वरिते हि विधीयमाने परिशिष्टम् "अनुदात्तं पदमेकवर्जम्" इत्यनुदात्तं तत्कृत उदात्तलोप इति चेत् सत्यम् 'मा हि धुक्षाताम्' इत्यत्र दुहेर्लुङि आत्मनेपदे आतामि "शल इगुपधादनिटः क्सः" इति च्लेः क्से आतामित्यस्य "तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" इति लसार्वधातुकाऽनुदात्तत्वं क्सः प्रत्ययस्वरेणोदात्तः । क्सस्याचि इति सूत्रेणाल्लोपः अत्र "कर्षात्वतो घञोऽन्त उदात्तः" इत्यतः 'अन्त' इत्यधिकारादन्त्यस्योदात्तत्वं स्यात् सति तु तस्मिन्नादेर्भवतीत्यलं पल्लवितेन ।

नोट—( प्रयोगमात्रसाधनप्रश्ने 'ङीबुदात्तः' अत्र पर्यन्तमेवोत्तरं पर्याप्तम् )

सुबामन्त्रिते पराङ्गवत्स्वरे ( १९२५, ५१ ) सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्यात् स्वरे कर्तव्ये इत्यर्थः । उदाहरणञ्चात्र-'द्रवत्पाणी शुभस्पती' ।

द्रवत्पाणी शुभस्पती (१९२७, ४४, ४५) अत्र "सुबामन्त्रिते पराङ्गवत्स्वरे" इति सूत्रेण परस्याङ्गवत्त्वात् आद्युदात्तत्वे "द्रवत्पाणी शुभस्पती" इति अत्र शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात् ।

अयमग्ने जरिता ( १९४१ ) अत्र "सुबामन्त्रिते पराङ्गवत्स्वरे" अत्रोपरि "षष्ठ्यामन्त्रितकारकवचनम्" इति परिगणनं कृतं तेन 'अयमग्ने जरिता' इत्यत्र नाङ्गवत्स्वरः इति ।

आ ते पितर्मरुताम् ( १९४६ ) अत्रैव "पूर्वाङ्गवच्चेति वक्तव्यम्" इति लिखितम् तेनात्र मरुतामिति परं पदं पूर्वस्य पितरित्यस्याङ्गवद् भवति । पितरित्यामन्त्रितनिघातेनानुदात्तं ततः परं मरुतामित्येतदप्यनुदात्तमेव भवतीत्यर्थः ।

उच्चैर्धीयान ( १९४३ ) "अव्ययानां न" इति वचनात् 'उच्चैरधीयान' अत्र "आमन्त्रितस्य च" इत्याद्युदात्तत्वं न । न च निषेधवैयर्थ्यम् "निपाता आद्युदात्ताः" इत्याद्युदात्तत्वस्यानिवारणादिति वाच्यम् । स्वरादिष्वन्तोदात्तयोरुच्चैर्नीचैः शब्दयोः पाठात् इति ।

उपाग्न्यधीयान ( १९३० ) अत्र "अव्ययीभावस्य त्विष्यते" इति पराङ्गवद्भावेन "आमन्त्रितस्य च" इति सूत्रेणाद्युदात्तत्वे 'उपाग्न्यधीयान' इति भवति ।

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ( १९३१, ३७ ) इति सूत्रस्वरूपम् । उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् इत्यर्थः । 'अभ्यभि हि' स्वरितस्ययणः—'खलप्व्याशा' इत्युदाहरणम्—

खलप्व्याशा ( १९३०, ४०, ४३, ५० ) अत्र 'खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः तस्य "ओः सुपि" इत्यनेन यण् स उदात्तयण् ततः परस्य ङिप्रत्ययस्य सुप्त्वात् "अनुदात्तौ सुप्पितौ" इति सूत्रेणाऽनुदात्तत्वे तस्यानुदात्तस्य "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इति सूत्रेण स्वरिते 'खलप्व्याशा इति । अत्र "उदात्तयणो हल्पूर्वात्" इत्युदात्तत्वं तु न भवति । "नोङ्धात्वोः" इति तन्निषेधात् । तस्य च स्वरितेकारस्य यणि ततः परस्याशाशब्दाकारस्य "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इत्यनेनैव स्वरितः । आशाशब्दो हि "आशाया अदिगाख्या चेत्" इत्यन्तोदात्तत्वादनुदात्तादिः । अत्र आशाशब्दस्य शेषनिघातस्तु न भवति, आशाशब्दप्रथमाकारस्थानिकस्य स्वरितस्य त्रैपादिकत्वेनाऽसिद्धत्वात् ।

ननु यणादेशम्प्रति स्वरितस्यासिद्धत्वात् स्थानिन्येव यण्प्रवृत्तेः यथा 'औजढत्' इत्यत्र ढत्शब्दे द्वित्वं प्रवर्तते न तु ढशब्दे । न च स्वरितयणः परस्येत्याश्रयणात् सिद्धत्वं शङ्क्यम् तथा सति "उदात्तादनुदात्तस्य स्वरितः" इत्यनेन यत्र स्वरितः क्रियते तत्रापि ह्यसिद्धत्वं न स्यात् । न चेष्टापत्तिः लक्ष्यविरोधात् । "प्रत्यग्निरुषसामग्रमख्यत्" इत्यादौ स्वरितादर्शनात् । न च "नोदात्तस्वरितोदयम्" इति निषेधः शङ्क्यः "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन "उदात्तादनुदात्तस्य" इति यत्र प्राप्तिस्तन्मात्रस्य निषेधात् । अन्यथा "खलप्व्याशान्या अग्निर्ग्राह्या अस्मान्" इत्यादावपि निषेधापत्तिरिति चेदत्राहुर्भाष्यकाराः—योगविभागः करिष्यते । उदात्तयणः परस्यानुदात्तस्य स्वरितो भवति । ततः 'स्वरितयणः', 'उदात्तयणः' इत्यनुवर्तते उदात्तयणः इत्येवं योऽभिनिर्वृत्तः स्वरितस्तद्यणः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः । एवञ्चास्यैवाश्रयात् सिद्धत्वं नान्यस्येति शम् ।

सूचना ( 'ननु यणादेशम्प्रति' इत्यादि सविस्तरप्रश्नोत्तरं बोध्यम् । प्रयोगमात्रप्रश्ने तु नन्वितः पूर्वलिखितमेव पर्याप्तमिति ज्ञेयम् )

**वोऽश्वाः** ( १९३२, ४४, ४८, ५१ ) "बहुवचनस्य वस्नसौ" इत्यत्र "अनुदात्तं सर्वमपादादौ" इत्यस्याधिकारात् 'वस्' इत्यस्यानुदात्तत्वे "अशेः क्वन्" इति व्युत्पादनादश्वशब्दस्यापि आद्युदात्ते वसो रुत्वे उत्वे "एङः पदान्तादति" इति पूर्वरूपे "एकादेश उदात्तेनोदात्तः" इति सूत्रेण उदात्तत्वे 'वोऽश्वाः' इति भवति ।

**'क्वावरं मरुतः** ( १९४२ ) अत्र किमोत् इत्यति 'क्वाति' इति किमः क्वादेशे 'तित्स्वरितम्' इत्यनेन स्वरिते अवरशब्दः "स्वाङ्गशिटामदन्तानाम्" इत्युदात्तः तयोर्दीर्घः "एकादेश उदात्तेनोदात्तः" इति दीर्घैकादेश उदात्तः 'क्वावरं मरुतः' इति ।

**स्वरितो वानुदात्ते पदादौ** ( १९२९, ३२, ३६ ) अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् इत्यर्थः । उदाहरणञ्चात्र—वीदं ज्योतिर्हृदये । अस्य श्लोको दिवीयते ।

**स्वरितो वानुदात्तेपदादौ" अत्र व्यवस्थितविभाषाफलम्** ( १९४१ ) अत्र सूत्रस्थविभाषा "व्यवस्थितविभाषा" अतः एकादेशस्थानिभूतयोः ह्रस्वेकारयोरेव स्वरितः तेन 'वीदं ज्योतिर्हृदये' अत्र स्वरितः । दीर्घप्रवेशे ( "अस्यश्लोकोदिवीयते"—घटकादिवीयतेऽत्र ) तु "एकादेश उदात्तेनोदात्तः" इत्युदात्तः किञ्च "एङः पदान्तादति" इति पूर्वरूपे स्वरित एव "सोऽयमगात्" ।

**क्षैप्रार्थः** ( १९४१ )—उदात्तस्वरितस्थाने यो यण् स 'क्षैप्रसन्धिः' ।

**प्रश्लेषः** ( १९४१ )—ह्रस्वयोर्यत्र सवर्णदीर्घः स 'प्रश्लेषः' उच्यते ।

**अभिनिहितार्थः** (१९४१) यत्र 'एङःपदान्तादति' इति पूर्वरूपं सः—अभिनिहितसन्धिरुच्यते । क्रमश उदाहरणानि 'वीदं ज्योतिः' 'अभ्यभि हि' 'तेऽवदन्' इति ।

**अग्निमीले** ( १९२५, २६, ३९, ४२, ५१ )—अत्राग्निशब्दः फिट्स्वरेण "फिषोऽन्त उदात्तः" इति सूत्रेणान्तोदात्तः । अम् सुप्त्वात् "अनुदात्तौ सुप्पितौ" इति सूत्रेणानुदात्तः । "अमि पूर्वः" इति सूत्रकृतैकादेश "एकादेश उदात्तेनोदात्तः" इत्यनेनोदात्तः । 'ईळे' इति तु 'ईड' स्तुतौ लटि उत्तमपुरुषैकवचनम् । "द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः" इति प्रातिशाख्येन डस्य ळत्वे "तिङ्ङतिङः" इति सूत्रेणातिङन्तादग्निशब्दात् परस्य 'ईळे' शब्दस्य निघातः "उदात्ताद-

नुदात्तस्य स्वरितः इति ईकारस्य स्वरितत्वे 'अग्निमीळे' इति। न च मकारेण व्यवधानम् "स्वरविधौ व्यञ्जनमविद्यमानवत्" इति परिभाषणात्। ननु "तित्स्वरितम्" इत्यस्यानन्तरमिदं वक्तव्यम्, एवञ्च स्वरितग्रहणं न कर्तव्यं भवतीत्याशङ्क्याह मूलेऽस्याप्यसिद्धत्वाच्छेषनिघातो न। यदि तत्र क्रियते "अनुदात्तं पदमेकवर्जम्" इत्येतत् प्रवर्तेत, इह प्रकरणे न प्रवर्तते स्वरितस्यासिद्धत्वात् तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं सिद्धमिति शम्।

**तमीशानासः** ( १६४६ )—तमिति तच्छब्दस्य द्वितीयैकवचनमन्तोदात्तम्। ऐश्वर्यार्थक 'ईश' धातोरस्माच्छानच्। ईशानशब्दाज्जसि "आज्जसेरसुक्" इत्यसुगागमे कृते रूपम्। (शानचः) चित्त्वादन्तोदात्तत्वम् जसः सुप्त्वादनुदात्तत्वम्। एवञ्च "उदात्तादनुदात्तस्य स्वरितः" इति सूत्रेण ईकारस्य सकाराकारस्य च स्वरितत्वम्। इति शम्।

**प्र य आरुः** ( १६४५ )—'ये' इति यच्छब्दस्य प्रथमाबहुवचनं फिट्स्वरेणान्तोदात्तम्। आरुरिति अर्तेर्लिटि प्रथमपुरुषबहुवचनं झिः तस्य "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्युस् प्रत्ययस्वरेणोदात्तः। न च "तिङ्ङतिङः" इति निघातः शङ्क्यः "यद्वृत्तान्नित्यम्" इति निषेधात्। आकारस्य "उदात्तस्वरितपरस्य सन्नतरः" इति वक्ष्यमाणसूत्रेण सन्नतरादेशः। अत्र 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्' इति सूत्रेण अगार्ग्यकाश्यपगालवमते स्वरितनिषेधः। गार्ग्यादिमते तु स्वरितत्वम् इति।

**एकश्रुतिः** ( १६३१, ५० )—उदात्तादीनां स्वराणामविभागेनावस्थानमेकश्रुतिः। आगच्छ भो माणवक।

**आगच्छ भो माणवक** ( १६५२ )—अत्र "दूराद्धूते च" इति वाक्यस्य टेः प्लुत उदात्तः। 'एकश्रुति दूरात्सम्बुद्धौ' इति। प्रत्युदाहरणे तु त्रैस्वर्यमेव भवति। तत्राङ् "उपसर्गाश्चाभिवर्जम्" इत्याद्युदात्तः। गच्छेति तिङन्तस्य निघातः। भोशब्दो "निपाता आद्युदात्ताः" इत्याद्युदात्तः। शेषस्यामन्त्रितनिघातः।

**अग्निर्मूर्धा दिवः ककुत्** ( १६३० )—अत्र "अङ्गेर्निर्नलोपश्च" इत्यनेन निष्पन्नोऽग्निशब्दः प्रत्ययस्वरेण फिट्स्वरेण वाऽन्तोदात्तः। मुर्वी बन्धने 'कनिन् युवृषितक्षिराजिधन्वि' इत्यतः कनिनि वर्तमाने "श्वन्नुक्षन्पूषन्" इत्यत्र मूर्धन्शब्दः कनिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः। दिव्शब्दात् परस्य षष्ठ्येकवचनस्य "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" इत्युदात्तत्वम्। ककुच्छब्दः प्रातिपदिकस्वरेणाऽन्तोदात्तः एवं

कृतेषु सत्सु "यज्ञकर्मण्यजपन्यूङ्खसामसु" इति सूत्रेणैकश्रुतौ 'अग्निर्मूर्धा दिवः ककुत्' इति भवति । एकश्रुतित्वन्नाम उदात्तादीनाम् स्वराणामविभागेनावस्थानमेकश्रुतिः । जपो नाम उपांशुप्रयोगः* यथा जले निमग्नस्य ।

**न्यूङ्खाः नाम ( १९३२ )**—षोडश ओङ्काराः । गीतिषु सामाख्या । जपोऽनुकरणमन्त्रः ।

**उदात्तस्वरितपरस्य सन्नतरः ( १९३३, ४४ )**—इति सूत्रम् । उदात्तस्वरितौ परौ यस्मात् तस्यानुदात्तस्यानुदात्ततरः स्यादित्यर्थः। सरस्वति शुतुद्रि । व्यचक्षयत्स्वः । इत्युदाहरणे ।

**सन्नतरः ( १९३१, ४४ )**—'अनुदात्ततरः' इत्यर्थः ।

**सरस्वति शुतुद्रि ( १९४३ )**—अत्र मे शब्दमाश्रित्यसरस्वतीत्यस्यामन्त्रितनिघातः। शुतुद्रिशब्दस्य तु न पादादित्वात् । "आमन्त्रितस्य च" इति षाष्ठेन शुतुद्रीत्यस्योदात्तं प्रथममक्षरं तस्मिन् परे पूर्वस्य सरस्वतीकारस्य "उदात्तस्वरितपरस्य सन्नतरः" इति सूत्रेण सन्नतरे ( अनुदात्ततरे ) 'सरस्वति शुतुद्रि' इति भवति ।

**व्यचक्षयत्स्वः ( १९४५ )**—वीति उपसर्गत्वादाद्युदात्तः । ततः परस्याचक्षयदितितिङन्तस्य "तिङः" इति निघातः । स्वरिति "न्यङ्स्वरौ स्वरितौ" इति स्वरितः तस्मिन परे "उदात्तस्वरितपरस्य सन्नतरः" इति सूत्रेण यकारस्य सन्नतरः "व्यचक्षयत्स्वः' इति भवति ।

इति साधारणस्वरः ।



## अथ धातुस्वरः

**स्वपन्ति ( १९२६, २९, ४७ )**—अत्र प्रयोगे "स्वपादिहिंसामच्यनिटि" इति सूत्रेण लसार्वधातुकपरे वैकल्पिकाद्युदात्तो भवति। पक्षे प्रत्ययस्वरेण मध्योदात्तता भवति । तत्र स्वपन्ति ।

**हिंसन्ति ( १९३१, ३५ )**—इत्यत्रापि "स्वपादिहिंसामच्यनिटि" इति सूत्रेण लसार्वधातुकपरे वैकल्पिकाद्युदात्ते 'हिंसन्ति' इति भवति पक्षे प्रत्ययस्वरेण मध्योदात्तता जाता तथा च हिंसन्ति । इति ।

---

* लक्षणम्—शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ न चालयेत् ।
अपरैर्न श्रुतः किञ्चित् स 'उपांशु' जपः स्मृतः ॥

**अभ्यस्तानामादिः** ( १९२५, २८ ) अनिट्यजादौ लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः । उदाहरणञ्चात्र ये ददति प्रिया वसु । दधाना इन्द्रे ।

**ये ददति प्रिया वसु** ( १९४८ )—दानार्थकडुञकारेत्संज्ञकदाधातोः लटि 'झि' आदेशे शपि श्लौ द्वित्वेऽभ्यासत्वे "अदभ्यस्तात्" इत्यदादेशे "श्नाभ्यस्तयोरातः" इत्यालोपे अत्र अनिटयजादौ लसार्वधातुकेपरे 'अभ्यस्तानामादिरुदात्त इत्यर्थक "अभ्यस्तानामादिः" इति सूत्रेणाद्युदात्तत्वे 'ये ददति प्रिया वसु' इति भवति ।

**भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति** ( १९४९ ). इति सूत्रस्वरूपम् । भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुकेपरे प्रत्ययात्पूर्वमुदात्तं स्यात् इत्यर्थः ।

**ममत्तु नः परिज्मा** ( १९२७, ४१, ४३ )—मदेर्लोटि तिपि शपि 'बहुलं छन्दसि' इति शपः श्लौ द्वित्वेऽभ्यासकार्ये उत्वे 'ममत्तु' अत्र प्रयोगे "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति" इति सूत्रेण प्रत्ययात्पूर्वस्योदात्तत्वे ममत्तु नः परिज्माघटक ममत्तु इति ।

**जागर्षित्वम्** ( १९२६, ५२ )—अत्र प्रयोगे "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वंपिति" इति सूत्रेण लसार्वधातुकेपरे प्रत्ययात्पूर्वस्योदात्तत्वम्, तेन स्वरविधौ सप्तम्यास्तदन्तत्वज्ञापनात् लिदन्तस्य स्वरो न शङ्कनीयः ।

**चिकीर्षकः** ( १९३२, ३४, ३७, ५१ )—सन्नन्तात् 'चिकीर्ष' इत्यस्मात् ण्वुल् तस्याकादेशे "लिति" इति सूत्रेण ककारेकार उदात्ते 'चिकीर्षकः' इति । नचात्राल्लोपस्य स्थानिवत्त्वम् स्वरविधौ तन्निषेधात् ।

**लोलूयं लोलूयम्** ( १९५० )—अत्र प्रयोगे यङन्ताण्णमुल् "नित्यवीप्सयोः" इति द्वित्वम् अत्र प्रथमः लोलूयशब्दः "आदिर्णमुल्यन्यतरस्याम्" इति आद्युदात्तः लू इति स्वरितः ततश्चत्वारः प्रचयाः । पक्षे लित्स्वरोऽपि बोध्यः ।

**लूयते केदारः स्वयमेव** ( १९४५ )—अत्र प्रयोगे "अचः कर्तृयकि" इति सूत्रेण उपदेशेऽजन्तानां कर्तृयकि परे आद्युदात्तो वा भवतीत्यर्थकेन आदिमध्यौ पर्यायेणोदात्तौ "तास्यनुदात्तेत्" इत्यादिसूत्रेण 'ते' इत्यस्यानुदात्तत्वम् । लूयते केदारः स्वयमेव । पक्षे (लूयते केदारः स्वयमेव ) इति भवति ।

**मा हि चीकरताम्** ( १९२५, ४९ )—'कृ' धातोर्णिचि अनुबन्धलोपे लुङि तसि तस्य तामादेशे च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरिचङ्" इति च्लेश्चङादेशेऽनुबन्ध-

लोपे कृ + इ + अ + तामिति स्थिते "चङि" इति द्वित्वेऽभ्यासत्वेऽभ्यासकार्ये वृद्धौ रपरत्वे उपधाह्रस्वे "णेरनिटि" इति णेर्लोपेऽडागमे प्राप्ते "न माङ्योगे" इति तन्निषेधे सन्वद्भावादिकार्ये 'मा हि चीकरताम्' इत्यत्राादुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वेकृते चङ एव स्वरे प्राप्ते "चङ्यन्यतरस्याम्" इति सूत्रेण धात्वकार उदात्तः एतदभावे चङुदात्तः ।

इति धातुस्वरः ।

## अथ प्रत्ययस्वरः

**चतुरः कल्पयन्तः** ( १९४२, ४६ ) अत्र चतेरुरन् इति निष्पन्नचतुर् शब्दस्य शसि रूपं भवति । अत्र "ञ्नित्यादिर्नित्यम्" इति नित्वादाद्युदात्तत्वे प्राप्ते तम्प्रबाध्य "चतुरः शसि" इत्यन्तोदात्तत्वे 'चतुरः' कल्पयन्तः इति ।

**चतस्रः पश्य** ( १९४२ ) अत्र नित्वात् "ञ्नित्यादिर्नित्यम्" इति आद्युदात्तता भवति । अत्र चतसृ + अस् इति स्थिते परत्वात् "अचिर ऋतः" इति रेफादेशे तकाराकारस्योदात्तत्वं प्राप्नोति किन्तु अचिरऋतः इति रादेशस्य पूर्वविधौ स्थानिवत्त्वान्नेह भवति । नच "स्वरविधौ स्थानिवत्त्वनिषेध इति वाच्यम्," "स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्" इति नियमेन तन्निषेधात् ।

**अध्वर्युभिः पञ्चभिः** ( १९४५ ) अत्र प्रयोगे "झल्युपोत्तमम्" इति सूत्रेणोपोत्तमस्योदात्तत्वे 'अध्वर्युभिः पञ्चभिः" इति भवति ।

**सर्वम् सर्वे, सर्वस्य** ( १२५, २९, ३२, ३३ ) एषु "सर्वस्य सुपि" इति सूत्रेण सर्वशब्दस्याऽद्युदात्तत्वे 'सर्वम्' इत्यादयः भवन्ति ।

**सौवर्यः सप्तम्यस्तदन्तसप्तम्यः** ( १९३० ) ननु "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति" इति सूत्रे पूर्वग्रहणाभावेनैव सिद्धे पूर्वग्रहणं व्यर्थमिति चेन्न–"सौवर्यः सप्तम्यस्तदन्तसप्तम्यः" इति ज्ञापनार्थं तस्यावश्यकत्वात् । तेन "सर्वस्य सुपि" इत्यस्य सुबन्तस्य सर्वस्येत्यर्थात् 'सर्वप्रियः' इत्यादौ स्वरसिद्धिः "ञ्नित्यादिर्नित्यम्" इत्यत्र ञिदन्तस्य निदन्तस्येत्यर्थलाभश्चेलम् ।

**अयं पन्थाः** ( १९३४, ४२, ४९ ) पथिन् शब्दात् सौ "पथिमथ्यृभुक्षामात्" इत्याकारादेशे "थोन्थः" इति न्थादेशे रुत्वे विसर्गे 'पन्थाः' इत्यत्र "पथिमथोः सर्वनामस्थाने" इति सूत्रेणाद्युदात्ते 'पन्थाः' इति भवति ।

अन्तश्च तवै युगपत् ( १९३२ )—इति सूत्रस्वरूपम् । तवैप्रत्ययान्तस्याद्यन्तौ युगपदाद्युदात्तौ स्तः इत्यर्थः । 'हर्षसे दातवा उ' इत्युदाहरणम् ।

दातवा उ ( १६२८, २७ )—ददातेः "कृत्यार्थे तवैकेन्केन्यत्वनः" इत्यनेन तवै प्रत्यये दा + तवै + उ इति जाते ऐकारस्याऽऽयादेशे "लोपः शाकल्यस्य" इति यकारस्य लोपे दातवा उ इति जाते "अन्तश्च तवै युगपत्" इति सूत्रेण तवैप्रत्ययान्तस्याद्यन्तयोर्युगपदुदात्तयोः कृतयोः 'दातवा उ इति भवति । यत्र केवलं 'दातवै' तत्र सन्धिकार्यं न कर्तव्यमिति । अन्यत्सर्वं पूर्ववत् बोध्यम् ।

जयोऽश्वः ( १९२५ )—जयत्यनेन 'जयः' इति विग्रहे जिधातोः "एरच्" इति सूत्रेण अच् प्रत्ययेऽनुबन्धलोपे गुणेऽयादेशे 'जय' इत्यस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'जयः' इति साधुः । अत्र "जयः करणम्" इति जयशब्दस्याद्युदात्तो भवति ।

चञ्चा ( १९२६ )—अत्र "संज्ञायामुपमानम्" इति सूत्रेणाद्युदात्तो भवति ।

स्वरविधौ प्रत्ययलक्षणंन (१९३०)—चञ्चेव चञ्चेत्यत्र कनि कनो लुपि प्रत्ययलक्षणेन नित्त्वात् "ञ्नित्यादिर्नित्यम्" इत्येवसिद्धे "संज्ञायामुपमानम्" इदं सूत्रं व्यर्थं सत् ज्ञापयति—"क्वचित् स्वरविधौ प्रत्ययलक्षणं न" इति ।

निष्ठा च द्व्यजनात् (१९३६)—निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो नत्वाकार इत्यर्थः । 'दत्तः' इत्युदाहरणम् ।

आशितम् (१९४४)—अत्रप्रयोगे कर्तृवाची आशितशब्दः आद्युदात्तः इत्यर्थक "आशितः कर्ता" इति सूत्रेणाद्युदात्तः ।

रिक्तः ( १९५२ )—रिचिर विरेचनेऽस्मात् निष्ठाक्ते प्रत्ययेऽनुबन्धलोपे 'रिक्त' इत्यस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'रिक्तः' घट इत्यर्थे "रिक्ते विभाषा" इति सूत्रेण विभाषयाद्युदात्ते रिक्तः इति । संज्ञायां तु "निष्ठा च द्व्यजनात्" इति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन । एवञ्च रिक्तः, रिक्तः इति भवतः ।

तुभ्यं हिन्वानः ( १६२९ )—युष्मद्शब्दात् ङेविभक्तौ "ङे प्रथमयोरम्" इत्यमि "तुभ्यमह्यौ ङयि" इति तुभ्यादेशे 'तुभ्यम्' अत्र "ङयि च" इत्याद्युदात्तत्वे 'तुभ्यम्' इति ।

मह्यं वातः पवताम् (१९२६, ३५)—अत्र "ङयिच" इति सूत्रेण ङेपरे आद्युदात्तो भवति तथा च 'मह्यम्' इति भवति ।

युञ्जन्त्यस्य काम्या ( १९४५ )—अत्र प्रयोगांशे कमेर्णिङन्तादचो यत् इति

यत् टापि 'काम्या' अत्र "यतोऽनावः" इति यत्प्रत्ययान्तस्य द्व्यच आद्युदात्तत्वे 'काम्या' इति।

**ईड्यो नूतनैरुत** (१९२५, ३३, ४६, ५०)—ईडितुं शक्य इति विग्रहे 'ईड्' धातोः "ऋहलोर्ण्यत्" इति ण्यत् प्रत्ययेऽनुबन्धलोपे 'ईड्य' इत्यस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे "ईडवन्दवृशंसदुहांण्यतः" इतिसूत्रेण 'ईड्य' इत्यस्याद्युदात्तत्वे 'ईड्यः' इति भवति।

**वार्यम्** (१९२६)—अत्रापि "ईडवन्दवृशंसदुहां ण्यतः" इति सूत्रेण 'वार्य' इत्यस्याद्युदात्तः।

**इन्धानः** (१९२९, ३१)—इत्यत्र "विभाषा वेण्विन्धानयोः" इति सूत्रेण वैकल्पिकाद्युदात्तो भवति। अत्र इन्धानशब्दो यदि चानशन्तस्तदा चित्त्वादन्तोदात्तः। यदा च शानजन्तस्तदा लसार्वधातुकाऽनुदात्तत्वेकृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः "श्नसोरल्लोपः" इत्युदात्तस्य श्नमोऽकारस्य लोपात् सर्वथाप्यप्राप्तमाद्युदात्तत्वं पक्षे विधीयते इति।

**शरावती** (१९२५, ३६, ३८, ३९, ४१)—शरास्सन्त्यस्याम् इति (शरावती नाम नदीति) विग्रहे शरशब्दात् "नद्यां मतुप्" इति सूत्रेण मतुपि अनुबन्धलोपे "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति सूत्रेण मकारस्य वकारे "शरादीनाञ्च" इति सूत्रेण दीर्घे ङीपि सौ सुलोपे 'शरावती' इत्यत्र "मतोः पूर्वमात्सञ्ज्ञायां स्त्रियाम्" इति सूत्रेण मतोः पूर्वस्याकारस्योदात्तत्वे 'शरावती' इति भवति।

**वेत्रवती** (१९४७, ५१)—अत्र "अन्तोऽवत्याः" इति सूत्रेणावतीशब्दस्यान्त उदात्तः।

इति प्रातिपदिकस्वरः।



# अथ फिट्स्वरे (प्रातिपदिकस्वरे) प्रथमः पादः।

**फिटसूत्राणां पाणिनीयैरुपादेयत्वम्** (१९३५, ४१, ५०, ५१)—फिडिति पूर्वाचार्यप्रसिद्ध्या प्रातिपदिकमुच्यते तदाह "फिषोन्त उदात्तः" इति सूत्रार्थे 'प्रातिपदिकं फिट्' इति। ननु कथमपाणिनीयानि सूत्राण्युपन्यस्यन्ते पाणिनीयसूत्रैर्यः स्वर आयाति स एव प्रमाणम्। तथा च "शताच्च ठन्यतावशते" इति सूत्रे कैयटः— "नियतकालाश्च स्मृतयो व्यवस्थाहेतवः" इति मुनित्रयमतेनाद्यत्वे साध्वसाधुप्रविभागः

इति। नैतत् 'अपाणिनीयान्यपि फिट्सूत्राणि पाणिनीयैराश्रीयन्ते' इति भाष्याज्ज्ञापनात्। तथाच "आद्युदात्तश्च" इति सूत्रे भाष्यं "प्रातिपदिकस्य चान्तः" इति प्रकृतेरन्तोदात्तत्वं शास्तीति। तथा तस्मिन्नेव सूत्रे प्रत्ययाद्युदात्तत्वस्याऽवकाशः, यत्रानुदात्ता प्रकृतिः समत्वं सिमत्वमिति। नहि "फिषोऽन्त उदात्तः" त्वत्त्वसमसिमेत्यादिफिट्सूत्राश्रयणं विना प्रकृतेरन्तोदात्तत्वं च सम्भवतीति दिक्।

**पाटला** ( १९४१ )—पाटलेति ओषधिविशेषस्य संज्ञात्र "लघावन्त" इति प्राप्ते "पाटलापालङ्काम्बासागरार्थानाम्" इति सूत्रेणान्तोदात्तः।

**गेहम्** ( १९२८ )—अत्र "नब्विषयस्यानिसन्तस्य" इति सूत्रेणाद्युदात्ते प्राप्ते "गेहार्थानामस्त्रियाम्" इत्यनेनान्तोदात्ते 'गेहम्' इति भवति।

**ध्यपूर्वस्य स्त्रीविषयस्य** ( १९३१ )—धकारयकारपूर्वो योऽन्त्योऽच् स उदात्तः स्यात् इत्यर्थः। 'अन्तर्धा' इत्युदाहरणम्।

**जाया** ( १९२९, ३१, ३९ )—अत्र "ध्यपूर्वस्य स्त्रीविषयस्य" इति सूत्रेण 'अन्त्योच्' उदात्तः।

**क्षत्रिया** ( १९४० )—अत्र प्रयोगे "यान्तस्यान्त्यात् पूर्वम्" इति फिट्सूत्रेण मध्योदात्तत्वे क्षत्रशब्दात् "क्षत्राद्घः" इति सूत्रेण घविधानेन "आद्युदात्तश्च" इति सूत्रेण प्रत्ययस्याद्युदात्तत्वे वा 'क्षत्रिया' इति मध्योदात्ता भवति।

**नखम्** ( १९४३, ५१ )—अत्र "स्वाङ्गशिटामदन्तानाम्" इति फिट्सूत्रेणाद्युदात्तत्वे प्राप्ते तम्प्रबाध्य "खान्तस्याश्मादेः" इति फिट्सूत्रेणान्तोदात्ते 'नखम्' इति।

**सुखम्** ( १९५२ )—अत्रापि "खान्तस्याश्मादेः" इति सूत्रेणान्तोदात्तः।

**बंहिष्ठः** ( १९३२ )—अतिशयेन बहुलः बंहिष्ठः इति व्युत्पत्तौ बहुलशब्दात् "अतिशायने तमबिष्ठनौ" इति सूत्रेण बहुलशब्दात् इष्ठन् प्रत्ययेऽनुबन्धलोपे "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः" इति सूत्रेण बंहिरित्यादेशे नित्वात् "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वे प्राप्ते तम्प्रबाध्य "हिष्ठवत्सरतिशत्थान्तानाम्" इति सूत्रेणान्तोदात्तत्वे 'बंहिष्ठः' इति भवति।

**परिवत्सरः** ( १९४२ )—अत्र अव्ययपूर्वपदप्रकृतिस्वरं बाधित्वा "हिष्ठवत्सरतिशत्थान्तानाम्" इति सूत्रेणान्तोदात्तत्वे 'परिवत्सरः' इति।

**दक्षिणो** ( बाहुः ) ( १९३८, ४४ )—अत्र "स्वाङ्गाख्यायामादिर्वा" इति सूत्रेण दक्षिणस्याद्यन्तयोः पर्यायेणोदात्तयोः कृतयोः 'दक्षिणो बाहुः' 'दक्षिणो बाहुः' इति भवति।

कृष्णो नोनाव वृषभः ( १६५० )—अत्र "वर्णानां तणतिनितान्तानाम्" इति आद्युदात्तत्वे प्राप्ते तम्प्रबाध्य "कृष्णस्यामृगाख्याचेत्" इति सूत्रेणान्तोदात्तः ।

पृष्ठम् ( १९४१, ४४ )—अत्र "स्वाङ्गशिटामदन्तानाम्" इत्याद्युदात्तत्वे प्राप्ते तम्प्रबाध्य 'पृष्ठस्य च" इति सूत्रेण वान्तोदात्तः । पृष्ठम्, पृष्ठम् । इति ।

कृत्तिकानक्षत्रम् (१९४२)—अत्र "नक्षत्राणामब्विषयाणाम्" इत्यन्तोदात्तत्वे प्राप्ते "न कुपूर्वस्य कृत्तिकाख्या चेत्" इति निषेधे "लघावन्ते द्वयोश्चबह्वषो गुरुः" इति सूत्रेणाद्युदात्तत्वम् ।

घृतम् (१९३४ )—अत्र "नब्विषयस्यानिसन्तस्य" इति सूत्रेणाद्युदात्तत्वे प्राप्ते तम्प्रबाध्य "घृतादीनां च" इत्यन्तोदात्तत्वे 'घृतम्' इति ।

ज्येष्ठः ( १९४७ )—अत्र "ज्येष्ठकनिष्ठयोर्वयसि" इति सूत्रेणान्तोदात्तः ।

इति फिट्स्वरे प्रथमः पादः ।



## अथ फिट्स्वरे द्वितीयः पादः ।

नब्विषयस्यानिसन्तस्य ( १९३२, ३७ )—इति सूत्रस्वरूपम् । इसन्तवर्जितस्य नित्यनपुंसकस्यादिरुदात्तः स्यात् इत्यर्थः । वने नवा यः । इत्युदाहरणम् ।

नप् ( १९३१, ३९, ४४ )—नपुंसकम् इत्यर्थः ।

तिलाः ( १९३३ )—अत्र प्रयोगे "तृणधान्यानां च द्व्यषाम्" इति सूत्रेणाद्युदात्ते 'तिलाः' इति ।

पञ्च ( १९५२ )—अत्र "न्रः सङ्ख्यायाः" इति सूत्रेणाद्युदात्ते 'पञ्च' इति ।

स्वाङ्गशिटामदन्तानाम् ( १९३४, ३६, ३८ )—इति सूत्रस्वरूपम् । स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्तः स्यात् इत्यर्थः । कर्णाभ्यां छुबुकादधि । ओष्ठाविव मधु । विश्वो विहायाः । इत्युदाहरणानि

शिट् ( १९३२ )—'सर्वनाम' इत्यर्थः ।

वृकः ( १९४२ )—अत्र "प्राणिनां कुपूर्वम्" इति सूत्रेणाद्युदात्तः ।

कन्दुकः ( १९४२ )—अत्र "खय्युवर्णं कृत्रिमाख्याचेत्" इति सूत्रेण खयि परे उवर्णस्योदात्तत्वे 'कन्दुकः' इति ।

तस्य नाक्षः ( १९४८ )—अत्र प्रयोगे "अक्षस्यादेवनस्य" इति सूत्रेण आद्युदात्तः ।

**लघावन्ते द्वयोश्च बह्वषो गुरुः** ( १९३३ )—इति सूत्रस्वरूपम् । अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वच्कस्य गुरुरुदात्तः स्यात् इत्यर्थः । कल्याणः । कोलाहलः, इत्युदाहरणे स्तः ।

**कल्याणः** ( १०३५, ३९, ४५ )—अत्र "लघावन्ते द्वयोश्च बह्वषो गुरुः" इति सूत्रेण पर्यायेणादिमध्यावुदात्तौ ततश्च 'कल्याणः' 'कल्याणं इति भवति ।

**कोलाहलः कोलाहलः** ( १६२९ )—अत्र "लघावन्ते द्वयोश्च बह्वषो गुरुः" इति बह्वच्कस्य गुरुरुदात्तः ।

**मल्लिका:** ( १९२८ )—अत्र "स्त्रीविषयवर्णाक्षुपूर्वाणाम्" इति सूत्रेणाद्युदात्तः ।

**तित्तिरिः** ( १९२७ )—अत्र "शकुनीनां च लघुपूर्वम्" इति पूर्वं लघूदात्तः ।

**केकयः** ( १९३७ )—अत्र जनपदशब्दानामषान्तानाम्" इत्यनेनाद्युदात्ते 'केकयः' इति ।

**पललम्** ( १९३६ )—अत्र प्रयोगे "ह्यादीनामसंयुक्तलान्तानामन्तः पूर्वं वा" इति सूत्रेणाद्युदात्तत्वे 'पललम्' इति । अनेनैव अन्त्यात्पूर्वस्योदात्तत्वे 'पललम्' इति भवति ।

**कृषिः** ( १९३४ )—अत्र प्रयोगे "इगन्तानां च द्व्यषाम्" इति सूत्रेणाद्युदात्तत्वे 'कृषिः' इति भवति ।

इति फिट्स्वरे द्वितीयः पादः ।



## अथ फिट्स्वरे तृतीयः पादः ।

**रसना** ( १९४२ )—अत्र "स्वाङ्गानामकुर्वादीनाम्" अत्रस्थाकुर्वादीनां पाठादत्र प्रयोगेऽस्य सूत्रस्याप्राप्तौ "स्वाङ्गशिटामदन्तानाम्" इति सूत्रेणाद्युदात्तत्वे 'रसना' इति भवति ।

**सुगन्धितेजनाः** ( १९४०, ४४, ४५ )—अत्र प्रयोगे "सुगन्धितेजनस्य ते वा" इति सूत्रेण आदिर्द्वितीयं तेशब्दश्चेति त्रयः पर्यायेणोदात्ताः तेन 'सुगन्धितेजनाः' 'सुगन्धितेजनाः' 'सुगन्धितेजनाः' इति भवति ।

**सनाथा सभा** ( १९४९ )—अत्र प्रयोगे "थान्तस्य च नालघुनी" इति सूत्रेण नाशब्दो लघु च उदात्तौ स्तः ।

**ईषान्तस्य ह्यादेरादिर्वा** ( १९३५ )—इति सूत्रस्वरूपम् । ईषान्तस्य

( हयिति हल्संज्ञा तेन ) हलादेरादिरुदात्तो वा स्यात् इत्यर्थः । 'हलीषा' 'लाङ्गलीषा' इत्युदाहरणे स्तः ।

**हलीषा** ( १९५२ )—अत्र "ईषान्तस्य हयादेरादिर्वा" इति सूत्रेण विभाषया-द्युदात्तत्वं भवति ।

**उशीरदाशेरः** ( १९४९ )—उशीरदाशेरकपालपलालशैवालश्यामाकशारीरश-रावहृदयहिरण्यापत्यदेवराणाम् । इति सूत्रस्वरूपम् । एषाम् ( उशीर, दाशेर, कपा-लप्रभृतीनां ) शब्दनामादिरुदात्तः स्यात् इत्यर्थः ।

इति फिट्स्वरे तृतीयः पादः ।



## अथ फिट्स्वरे चतुर्थः पादः ।

**पारावतः** ( १९६२ )—अत्र "पारावतस्योपोत्तमवर्जम्" इति सूत्रेण उदात्तत्वे क्रमेण 'पारावतः' पारावतः, 'पारावतः' इति भवति ।

**स्थालीपाकः** ( १ ९५२ )—अत्र "धूम्रजानुमुञ्जकेशकालवालस्थालीपाकाना-मघूजलस्थानाम्" इत्युदात्तत्वे 'स्थालीपाकः" इति भवति ।

**न्यर्बुदम्** ( १९२८ )—अत्र "न्यर्बुदव्यल्कशयोरादिः" इत्यादिस्वरितत्वे 'न्यर्बुदम्' इति भवति ।

**तिल्यम्** ( १६४२ )—तिलानां भवनं क्षेत्रं तिल्यमित्यत्र "तिल्यशिक्यकाश्म-र्यधान्यकन्याराजमनुष्याणामन्तः" इति सूत्रेणान्तस्वरिते 'तिल्यम्' इति भवति ।

**स्तरीरुत्वत्** ( १९५० )—अत्र "त्वत्त्वसमसिमेत्यनुच्चानि" इत्यनेनानुदात्तः ।

**उतत्वः पश्यन्** ( १६४५ )—अत्र "त्वत्त्वसमसिमेत्यनुच्चानि" इत्यने-नानुदात्तः ।

**स्वाहा** ( १९३१, ३३ )—अत्र "निपाता आद्युदात्ताः" इति सूत्रेण आद्युदा-त्तत्वे "स्वाहा' इति भवति ।

**तन्नेमिमृभवो यथा** ( १९४८ )—अत्र 'यथा' शब्दः पादान्तेऽनुदात्तः स्या-दित्यर्थक "यथेति पादान्ते" इति सूत्रेणानुदात्तत्वे तन्नेमिमृभवो 'यथा' इति भवति ।

**पटुपटुः** ( १९३२, ४०, ५१ )—अत्र "प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः" इति सूत्रेणान्तोदात्तत्वे "पटुपटुः" इति भवति । ननु "कर्मधारयवदुत्तरेषु" इति

कर्मधारयवद्भावादेव "समासस्य" इत्यन्तोदात्तत्वे सिद्धे व्यर्थमिदमिति वाच्यम् तस्य पाणिनीयात् पूर्वं प्रवृत्तत्वेनाऽदोषात् ।

दि॒वेदि॑वे ( १९४१, ५१ )—अत्र प्रयोगे 'शेषं सर्वमनुदात्तम्" इति सूत्रेण द्विरुक्तस्य परमनुदात्तम् ।

इति फिट्स्वरे चतुर्थः पादः ।



## अथ प्रत्ययस्वरः ।

**नभन्तामन्य॒के स॑मे (१९४४)**—अत्र प्रयोगांशे अन्यशब्दात् 'अव्ययसर्वनाम्नामकच् प्राक् टेः" इति सूत्रेणाकच्प्रत्यये अन्यकशब्दस्य प्रथमाबहुवचने अकचः परा 'टिः' "चितः सप्रकृतेर्बह्वकजर्थम्" इति सूत्रेणोदात्ता जाता ।

**कौञ्जाय॒नाः ( १९३२ )**—कुञ्जस्यापत्यानि बहूनि इति विग्रहे "गोत्रे कुञ्जादिभ्यश्च्फञ्" इति सूत्रेण च्फञ्प्रत्यये अनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकत्वे सुपो लुकि फस्यायनादेशे वृद्धौ "व्रातच्फञोरस्त्रियाम्" इति सूत्रेण ञ्यप्रत्यये "ञ्यादयस्तद्राजाः" इति तद्राजसंज्ञायां "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इति सूत्रेण लुकि विभक्तिकार्ये "तद्धितस्य" इति सूत्रेणान्तोदात्ते "कौञ्जायनाः" इति । ननु "चितः सप्रकृते बह्वकजर्थम्" इत्यनेनैवान्तोदात्तत्वे सिद्धे सूत्रमिदं व्यर्थमिति वाच्यम्, ञित्स्वरबाधनार्थमस्यावश्यकत्वात् ।

**यदा॒ग्ने॒यः ( १९३१, ३३, ३५ )**—अग्निशब्दात् "अग्नेर्ढक्" इति सूत्रेण ढकि प्रत्यये तद्धितान्तत्वात् प्रातिपदिकत्वे सुपो लुकि आद्यचो वृद्धौ ढस्य "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण ढस्यैयादेशे विभक्तिकार्ये "कितः" इति सूत्रेणान्तोदात्ते 'आग्नेयः' इति भवति ।

**वा॒चा विरू॑पः ( १९४५, ४७ )**—अत्र प्रयोगांशे "सावेकाचस्तृतीयादिर्विभक्तिः" इति सूत्रेण 'वाचा' इत्यत्र तृतीया विभक्तिरुदात्ता ।

**परम॒वाचा—( १९४४ )**—अत्र "अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे" इति सूत्रेण विभाषया तृतीया विभक्तिरुदात्ता पक्षे वाशब्द उदात्तः ।

**प्र॒ष्ठौहः ( १९४४ )**—अत्र "छन्दसि सहः" "वहश्च" इति ण्विप्रत्यये सर्वापहारे 'वाह ऊठ्' इत्यूठि निष्पन्नः 'प्रष्ठवाह्' शब्दः "गतिकारकोपपदात् कृत्" इति सूत्रेणान्तोदात्तः । प्रष्ठवाह् शब्दस्य शसि रूपम् । तेनात्र एकाजन्तोदात्तेभ्यः पराऽ-

सर्वनामस्थान-विभक्तिरुदात्ता स्यादित्यर्थक "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" इति सूत्रे-णोदात्तत्वम् । अत्र प्रष्ठौह्शब्दस्यानेकाच्त्वेऽपि ऊठ्शब्दस्यैकाच्त्वमेवेति दिक् ।

**अक्षद्युवा ( १९३० )**—अक्षैर्दीव्यतीति विग्रहे क्विपि सर्वापहारेऽन्तरङ्गत्वा-दूठि यणादेशे उपपदसमासे कृत्स्वरेणान्तोदात्तत्वे 'अक्षद्युवा' इति भवति । "ऊडिदं-पदाद्यप्पुम्रैद्युभ्यः" इति सूत्रोपरि "ऊठ्युपधाग्रहणं कर्तव्यम्" इत्युक्तम् । तेन उपधा-भूत ऊठ् गृह्यते न त्वन्त्यः इत्यर्थः । पञ्चमीनिर्देशात् परस्यैव ग्रहणे प्राप्ते वचनम् , तेनात्र ( अक्षद्युवेत्यादौ ) विभक्तेराद्युदात्तत्वं न भवति ।

**अहरहर्जायते मासि मासि (१९२७)**—अत्र मासीति प्रयोगे "ऊडिदंपदा-द्यप्पुम्रैद्युभ्यः" इति सूत्रेणासर्वनामस्थानङिविभक्तेरुदात्तत्वे 'अहरहर्जायते मासि मासि" इति भवति ।

**उपत्वाग्ने दिवे दिवे ( १९३० )** अत्र प्रयोगे "ऊडिदंपदाद्यप्पुम्रैद्युभ्यः" इति सूत्रेणोदात्तत्वे "उपत्वाग्ने दिवे दिवे" इति भवति ।

**अष्टाभिर्दशभिः ( १९३४ )**—अत्र "अष्टनो दीर्घात्" इति सूत्रेण भिसः उदात्तत्वे 'अष्टाभिः' इति भवति । सूत्रार्थश्च-दीर्घान्तादष्टनः पराऽ-सर्वनामस्थानविभक्तिरुदात्ता भवति । अत्र चाष्टन्शब्दे प्राप्तं "झल्युपोत्तमम्" इति-प्रबाध्य विभक्तेरुदात्तत्वम् । 'अष्टभिः' इत्यत्र तु "झल्युपोत्तमम्" इत्यनेनैव स्वरः सिद्धो भवति । नन्वत्रापि "अष्टन आ विभक्तौ" इत्यनेनात्वं विकल्पस्य तद्विधावभावा-दितिचेत् , युक्तम्-इहस्थमेव दीर्घग्रहणमात्वविकल्पमष्टनो ज्ञापयति । नो चेत् दीर्घ-ग्रहणमेवव्यर्थं स्यात् । ज्ञापयति च कृतात्वनिर्देशस्य षट्संज्ञाम् । अन्यथा सावकाशो ह्यात्वपक्षेऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेणैव बाधिष्यते इति किं तेन दीर्घ-ग्रहणेनेति शम् ।

**जानती ( १९२९ )**—शत्रन्तजानतीत्यत्र "आद्युदात्तश्च" इत्यनेन शत्रन्तो-दात्तत्वे "शतुरनुमो नद्यजादी" इति सूत्रेणेकारस्योदात्तत्वे 'जानती' इति भवति ।

**उदात्तयणो हल्पूर्वात् ( १९२९, ४८ )**—उदात्तस्थाने यो यण् हल्पूर्वस्त-स्मात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात् इति व्याख्यार्थः । 'चोदयित्री सूनृतानाम्' एषा ते नेत्री । इत्युदाहरणे स्तः ।

**चोदयित्री सूनृतानाम् ( १९४३ )** चोदयित्री इति तृजन्तत्वात् "चितः" इत्यन्तोदात्ते कृते "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इति प्राप्ते तम्प्रबाध्य "उदात्तयणो हल्पूर्वात्" इति सूत्रेणोदात्तत्वे 'चोदयित्री' इति भवति ।

**नेत्री**—( १९३६, ४५ )—अत्र तृजन्तत्वात् "चितः" इति सूत्रेणान्तोदात्तत्वे प्राप्ते तम्प्रबाध्य "उदात्तयणो हल्पूर्वात्" इति सूत्रेणोदात्तत्वे 'नेत्री' इति भवति।

**सेत्पृश्निः सुभ्वे** (१६३०)—अत्र क्विबन्तस्य सुभू इत्यस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वेऽन्तोदात्तभूतस्य सुभूशब्दस्य चतुर्थ्येकवचने "ओः सुपि" इति यणादेशे "उदात्तयणो हल्पूर्वात्" इति सूत्रेणोदात्तत्वे प्राप्ते "नोङ्धात्वोः" इति तन्निषेधे "सुभ्वे" इति भवति।

**अक्षण्वन्तः** ( १९३७, ४४ )—अक्षिशब्दान्मतुपि "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इति "छन्दस्यपि दृश्यते" इत्यनङि ङकारस्येत्संज्ञायां लोपे च "अनो नुट्" इत्यस्यासिद्धत्वात् पूर्वं नलोपे ततो भूतपूर्वगत्या मतुपो नुटि उटावितौ "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मकारस्य वत्वे णत्वे "ह्रस्वनुड्भ्यां मतुप्" इति सूत्रेण नुटः परस्य मतुपः उदात्तत्वे 'अक्षण्वन्तः' इति भवति।

**स्वरविधौ व्यञ्जनमविद्यमानवदित्येतदत्रनेष्यते** ( १९३०, ४५ )—ननु 'मरुत्वान्' इत्यत्र "स्वरविधौ व्यञ्जनमविद्यमानवत्" इति परिभाषया तकारस्याविद्यमानवत्त्वेन ह्रस्वान्तात्परत्वस्य मतुपि सत्वेन "ह्रस्वनुड्भ्यां मतुप्" इति स्वरापत्तिरत आह-"स्वरविधौ व्यञ्जनमविद्यमानवत्" इत्येतदत्र नेष्यते इति। अयंभावः- "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" इति सूत्रे पृथिव्यादिपर्युदासो व्यर्थः। उदात्तत्वादेरज्धर्मतया पकारस्यैवादौ सत्वेनाऽनुदात्तादित्वाभावादिति तत्सामर्थ्येन स्वरविधाविति परिभाषा कल्प्यते, ततश्च पकारस्याविद्यमानत्वेनानुदात्तादित्वसत्वात् "देवता द्वन्द्वे च" इति प्राप्तप्रकृतिस्वरस्य निषेधप्राप्तौ पर्युदासः सार्थक इति। एवञ्च ज्ञापकसाजात्यात् स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधावेव स्वरविधावित्यस्य प्रवृत्त्या प्रकृते "ह्रस्वनुड्भ्यां मतुप्" इत्यस्य स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वाऽभावात् परिभाषाऽप्रवृत्तौ "मरुत्वान्" इत्यत्र न स्वर इति। नन्व इषुमानित्यत्र "ह्रस्वनुड्भ्याम् मतुप्" इत्यस्याऽप्रवृत्तयेऽन्तोदात्तादित्यनुवृत्तेरावश्यकतया अस्यापि स्वरत्वव्याप्यधर्मावच्छिन्नविषयतायाः प्रतिबन्धकं व्यञ्जनं न भवतीत्यर्थस्वीकारेणान्तोदात्तत्वबुद्धेः प्रतिबन्धासम्भवेऽपि ह्रस्वान्तत्वबुद्धेः प्रतिबन्धात् ह्रस्वनुड्भ्यामित्यस्याप्रवृत्तेः। अतएव नुड्ग्रहणं चरितार्थम्। अन्यथा ह्रस्वान्तत्वादेव सिद्धे तद् व्यर्थं स्यादित्यलम्। "स्वरविधौ व्यञ्जनमविद्यमानवत्" अत्र यतोऽनाव इत्यत्रस्थः 'अनाव' इति निषेधोपि ज्ञापकः, इत्यादि विस्तरभिया समाप्यते।

**नामान्यतरस्याम्** ( १९४२ )—इति सूत्रस्वरूपम्। मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा स्यात् इत्यर्थः।

**चेतन्ती सुमतीनाम्** ( १९५२ )—सुमतीनामत्र सुमतिशब्दोबहुव्रीहिः सुमतिशब्दस्य षष्ठीबहुवचने सुमतीनामत्र "नञ्सुभ्याम्" इति सूत्रेणान्तोदात्तत्वे "नामन्यतरस्याम्" इति सूत्रेण नामुदात्तो वा जातः। तेन पक्षेऽनुदात्तस्य स्वरितत्वम्।

**त्रिभिष्ट्वं देव** ( १९३१, ३५, ५२ )—इत्यत्र "षट्त्रिचतुर्भ्यो हलादिः" इति सूत्रेण त्रिशब्दात्परस्य हलादिविभक्तेरुदात्तत्वे भिसः उदात्तत्वं सिद्ध्यति। नात्र सूत्रे "अन्तोदात्तात्" इत्यस्यानुवृत्तिः। अनुवृत्तौ पञ्चानां नवानां चतुर्णाम् इत्यत्र न स्यात्। "नूः सङ्ख्यायाः" इत्याद्युदात्तत्वात्। तर्हि क्व स्यात्? सप्तानामष्टानाम्। अत्र च सप्ताष्टन्शब्दौ घृतादित्वादेव "घृतादीनाञ्च" इत्यन्तोदात्ताविति दिक्।

**क्व नूनम्** ( १३,३४, ५१ )—अत्र "किमोत्" इत्यति अनुबन्धलोपे तित्प्रत्ययस्यान्तः स्वरितः स्यादित्यर्थक "तित्स्वरितम्" इति सूत्रेणान्तस्य स्वरितत्वे "क्वाति" इति सूत्रेण किमः क्वादेशे 'क्व' इति एवञ्च 'क्व नूनम्' इति भवति।

**तास्यनुदात्तेत्** ( १९२६, ४०, ४९ )—"तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्निङ्वङोः" इति सूत्रस्वरूपम्। तास्यादीनां समाहारद्वन्द्वः। उपदेशग्रहणं सम्भवव्यभिचाराभ्यां ङिदद्भ्यां सम्बध्यते, नतु तास्यनुदात्तेद्भ्याम् ङिदिति कर्मधारयः। उपदिश्यते इति उपदेशः। तस्याकारेण ङिता च विशेषणात्तदन्तविधिः तथाच सूत्रार्थः—तासेरनुदात्तेतो ङिदन्तोपदेशादकारान्तोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात् ह्निङ्वङौ वर्जयित्वा। उदाहरणानि—तासि—कर्ता, कर्तारौ, कर्तारः। अनुदात्तेत्—य आस्ते। ङितः—अभिचष्टे अनृतेभिः। अदुपदेशात्—पुरुभुजा चनस्यतम्, वर्धमानं स्वे दमे। प्रत्युदाहरणानि—तास्यादिभ्यः किम्—अभिवृधे गृणीतः, उपदेशग्रहणात् नेह—'हतो वृत्राण्यार्या, लग्रहणं किम्—कृतोह निघ्नानाः। सार्वधातुके किम्—शिश्ये, अह्निङ्वङोः किम्—ह्नुते। यदधीते।

**य आस्ते** ( १९४१ )—अत्र "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्निङ्वङोः" इति सूत्रेण लसार्वधातुके अनुदात्ते 'य आस्ते' इति भवति।

**इन्धे राजा** ( १९२७ )—अत्र प्रयोगे "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्निङ्वङोः" इति सूत्रेणानुदात्तत्वे प्राप्ते "विन्दीन्धिखिदिभ्यो नेति वक्तव्यम्" इत्यनेन तन्निषेधे 'इन्धे राजा' इति भवति।

**यासिष्टं वर्तिरश्विनौ** (१९४२, ४४, ४९)—अत्र "आदिःसिचोऽन्यतरस्याम्" इति सूत्रेणाद्युदात्तत्वे 'यासिष्टं वर्तिरश्विनौ' इति ।

**लुलविथ** ( १९४१, ४६ )—अत्र "थलि च सेटीडन्तो वा" इति सूत्रेण चत्वारोऽपि पर्यायेणोदात्ताः जाताः ।

**यदाहवनीये** ( १९३२, ३३, ३९ )—बाहुलकादधिकरणे प्रीणनार्थात् कर्मणि वा अनीयर् प्रत्यये ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरे "उपोत्तमं रिति" इति सूत्रेणोपोत्तमस्योदात्तत्वे 'आहवनीये' इति भवति ।

इति प्रत्ययस्वरः ।

## अथ समासस्वरः ।

**शस्त्रीश्यामा** ( १९२९ )—अत्र प्रयोगे "उपमानानि सामान्यवचनैः" इति समासे "समासस्य" इति सूत्रेण अन्तोदात्ते प्राप्ते तम्प्रबाध्य "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे 'शस्त्रीश्यामा' इति भवति । अत्र शस्त्रीशब्दः गौरादिङीषन्तोदात्तः ।

**मुहूर्तसुखम्** ( १९४६ )—अत्र "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वम् । अत्र "कालाध्वनोरत्यन्तसंयोगे च" इति द्वितीयासमासे मुहूर्तशब्दः पृषोदरादित्वादन्तोदात्तः ।

**कृष्णसारङ्गः** ( १९४३, ४७ )—अत्र "वर्णो वर्णेष्वनेते" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'कृष्णसारङ्गः' इति भवति । कृष्णशब्दो नक्प्रत्ययान्तः । "कृष्णस्यामृगाख्याचेत्" इत्यन्तोदात्तो वेदे । भाषायां तु "वर्णानां तणतिनितान्तानाम्" इत्याद्युदात्तो भवति ।

**अरित्रगाधम्** ( १९४४ )—तत्प्रमाणम् इत्यर्थः । अरित्रं नौकाष्ठं तस्य ( अरित्रस्य ) गाधं स्पृश्यमानतलम् अरित्रगाधम् । गाध्यते इति गाधः 'गाधृ' प्रतिष्ठायाम् "कर्मणि घञ्" अर्धर्चादित्वात् क्लीबत्वम् "अर्तिलूधूसूखनसहचर इत्रः" इति सूत्रेण इत्रप्रत्ययः । इत्रान्तोऽरित्रशब्दो मध्योदात्तः प्रत्ययस्वरेण, षष्ठीसमासे "समासस्य" इत्यन्तोदात्ते प्राप्ते "गाधलवणयोः प्रमाणे" इति पूर्वपदप्रकृतिस्वरत्वे 'अरित्रगाधम्' इति भवति ।

**गोलवणम्** ( १९३३ )—"गलेर्डोः" इति सूत्रेण डोप्रत्ययेऽनुबन्धलोपे डित्वाट्टिलोपे षष्ठीसमासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तत्प्रबाध्य "गाधलवणयोः प्रमाणे" इति सूत्रेण पूर्वपदप्रकृतिस्वरे जाते 'गोलवणम्' इति भवति। यावद्गवे दीयते तावदित्यर्थः।

**गमनचिरम्** ( १९४४ )—गम्धातोर्ल्युटि ल्युडन्तः गमनशब्दः तस्य 'लित्स्वरः' विशेषणसमासश्च तथा च "समासस्य" इत्यन्तोदात्तत्वे प्राप्ते "प्रतिबन्धि चिरकृच्छ्रयोः" इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे 'गमनचिरम्' इति भवति। गमनं कारणविकलतया चिरकालभावि कृच्छ्रयोगि च प्रतिबन्धि जायते। ननु समानाधिकरण्ये विशेषणसमासो भवति न चेह तदस्ति गमनशब्दस्य गतिवाचित्वाच्चिरशब्दस्य कालवाचित्वात्। नैष दोषः चिरकालवाचिनि गमनेऽत्र चिरशब्दो वर्तते गमनमत्र विशेष्यं तद्विशेषणे तु चिरकृच्छ्रे तत्र विशेष्यस्य पूर्वनिपातार्थं मयूरव्यंसकादित्वमप्येष्टव्यम्।

**उच्चारपदेन प्रस्थितः** ( १९४० )—उच्चारो घञन्तस्तेन "थाथघञ्क्ताजबित्रकाणाम्" इति सूत्रेणान्तोदात्तः ततश्च उच्चारस्य पदमिति षष्ठीतत्पुरुषसमासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "पदेऽपदेशे" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'उच्चारपदेन प्रस्थितः' इति भवति। उच्चारः पुरीषक्रिया तस्य पदेन व्याजेन प्रस्थितः गतः इत्यर्थः।

**रज्जुशारदम्** ( १९२७, ४१, ४४ )—अत्र "सृजेरसुम् च" इति सृजेरुः स च नित् धातोरसुमागमः सलोपश्च तत्र सृजेरन्त्यादचः परेऽसुमि सलोपयणादेशेऽसुम्सकारस्य श्चुत्वे जश्त्वे च रज्जुरिति भवति। तत्र प्रत्ययस्य नित्त्वात् "ञ्नित्यादिर्नित्यम्" इति सूत्रेण आद्युदात्तो भवति, अत्र समासे "समासस्य" इति सूत्रेण अन्तोदात्ते प्राप्ते तत्प्रबाध्य "शारदेऽनार्तवे" इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे 'रज्जुशारदम्' इति भवति।

**पितृसदृशः** ( १९४२ )—अत्र पितृशब्दः तृजन्तः चित्स्वरेणान्तोदात्तः ततश्च समासे "समासस्य" इत्यन्तोदात्ते प्राप्ते तत्प्रबाध्य सादृश्यवाचिनितत्पुरुषे पूर्वपदं प्रकृत्या एतयोरुत्तरपदयोरित्यर्थक "सदृशप्रतिरूपयोः सादृश्ये" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'पितृसदृशः' इति भवति। नन्वत्र "पूर्वसदृशसमोनार्थ" इति तृतीयासमासे कृते 'तत्पुरुषे तुल्यार्थ'-इत्येव सिद्धम्। न च तुल्यार्थयोगे षष्ठ्या अपि

विहितत्वेन षष्ठीसमासार्थमिदमिति वाच्यम्। तत्रानभिधानात् षष्ठीसमासो नेत्यस्य सुवचत्वादिति चेन्मैवम्। अलुक्समासानुरोधेन षष्ठीसमासस्वीकारस्यावश्यकत्वात् इत्यादिविषयस्य प्रयोगमात्रप्रश्ने नास्ति आवश्यकतेति विज्ञेयम्।

**मात्रोपज्ञोपक्रमच्छाये नपुंसके ( १९२९ )**—मात्रादिषु परतो नपुंसकवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थः। भिक्षामात्रम्। पाणिन्युपज्ञम्। नन्दोपक्रमम्। इषुच्छायम्। इत्युदाहरणानि।

**पाणिन्युपज्ञम्—( १९३२, ४५ )**—उपज्ञायते इत्युपज्ञा अत्र "आतश्चोपसर्गे" इति सूत्रेण कर्मण्यङ् पाणिनिशब्दः इञन्तत्वादाद्युदात्तः। अस्य उपज्ञा इति षष्ठीतत्पुरुषसमासे "उपज्ञोपक्रमम्" इत्यादिना नपुंसकत्वे "समासस्य" इत्यन्तोदात्ते प्राप्ते तम्प्रबाध्य "मात्रोपज्ञोपक्रमच्छाये नपुंसके" इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे "पाणिन्युपज्ञम्" इति सिद्धम्।

**छात्रप्रियोऽनध्यायः ( १९४६ )**—अत्र छात्रशब्दः "छत्रादिभ्यो णः" इति विहितणप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः तथा च समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "प्रीतौ च" इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे 'छात्रप्रियोऽनध्यायः' इति बोध्यम्।

**गोस्वामी ( १९५१ )**—अत्र षष्ठीसमासे "समासस्य" इति सूत्रेण अन्तोदात्तत्वे प्राप्ते "स्वं स्वामिनि" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'गोस्वामी' इति भवति।

**भूपतिः ( १९३० )**—अत्र प्रयोगे भुवः पतिः भूपतिः इति विग्रहे समासे "समासस्य" इति सूत्रेणान्तोदात्ते ततश्च "पत्यावैश्वर्ये" इति सूत्रेण प्रकृतिस्वरे प्राप्ते "न भूवाक्चिद्दिधिषु" इति तन्निषेधे 'भूपतिः' इति भवति।

**भुवनपतिः ( १९५२ )**—अत्रापि भुवनस्य पतिरिति विग्रहे षष्ठीतत्पुरुषसमासे "समासस्य" इत्यन्तोदात्ते "पत्यावैश्वर्ये" इति प्रकृतिस्वरे प्राप्ते "वा भुवनम्" इति विकल्पेन तन्निषेधे 'भुवनपतिः' इति भवति। पक्षे पूर्वपदप्रकृतिस्वरत्वम्।

**गमनाबाधम् ( १९४३ )**—आङ्पूर्वकलोडनार्थकलृकारेत्संज्ञकबाधधातोः कर्मणि घञ् "ञ्नित्यादिर्नित्यम्" इति सूत्रेणाद्युदात्ते गमनशब्दो लित्स्वरेणाद्युदात्तः गमनमाबाध्यते निकटतरमिति विशेषणसमासे मयूरव्यंसकादित्वात् वा समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "आशङ्काबाधनेदीयस्सु सम्भावने" इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे 'गमनाबाधम्' इति भवति।

गमनेनेदीयः (१९४१)—अत्र 'नेदीय' इति अतिशयेनान्तिकं नेदीयः अन्तिकशब्दादतिशयेऽर्थे ईयसुनि प्रत्यये "अन्तिकबाढयोः" इत्यादिसूत्रेण नेदादेशे मयूरव्यंसकादित्वात्समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "आशङ्काबाधनेदीयस्सु सम्भावने" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'गमननेदीयः' इति भवति।

मद्रसंविधम् (१९२१, ४७)—मद्रस्य सविधम् मद्रसविधम् इत्यत्र षष्ठीसमासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य सामीप्यार्थेषु सविधादिषूत्तरपदेषु पूर्वपदं प्रकृत्या स्यात्तत्पुरुषे इत्यर्थक "सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'मुद्रसंविधम्' इति भवति।

मद्रसवेशम्—(१९३७)—अत्र मद्रस्य सवेशम् इति स्थिते षष्ठीसमासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य सामीप्यार्थेषु सविधादिषूत्तरपदेषु पूर्वपदं प्रकृत्या स्यात् तत्पुरुषे इत्यर्थक "सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'मुद्रसंवेशम्' इति भवति।

गमनज्येष्ठम् (१९४०)—अत्र समासे मयूरव्यंसकादित्वात् राजदन्तादित्वात् वा विशेषणस्य ज्येष्ठ इत्यस्य परनिपाते "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "अज्यावमकन्पापवत्सु भावे कर्मधारये" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'गमनज्येष्ठम्' इति।

कुमारश्रमणा (१९३४, ५१)—कुमारी श्रमणा कुमारश्रमणा अत्र "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति परिभाषया "कुमारः श्रमणादिभिः" इति सूत्रेण कुमारीशब्दस्य समासे पुंवद्भावे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "कुमारश्च" इति सूत्रेण पूर्वपदप्रकृतिस्वरे कुमारशब्दात् पचाद्यच्विधानेन कुमारशब्दस्य "चितः" इत्यन्तोदात्त "कुमारश्रमणा" इति।

कुमारप्रत्येनाः (१९४२, ४९)—प्रतिगतमेनोऽस्य प्रत्येनाः कुमारश्चासौ प्रत्येनाः कुमारप्रत्येनाः अत्र कर्मधारयसमासः। तत्र कुमारशब्दस्य अन्तोदात्ते प्राप्ते "आदिः प्रत्येनसि" इति सूत्रेण कुमारशब्दस्य आद्युदात्तत्वे 'कुमारप्रत्येनाः' इति भवति।

पञ्चारत्निः (१९४५)—पञ्चारत्नयः प्रमाणमस्य पञ्चारत्निः अत्र तद्धितार्थे द्विगुः "प्रमाणे लो द्विगोर्नित्यम्" इति मात्रचो लुकि "समासस्य" इत्यन्तोदात्ते प्राप्ते "इगन्तकालकपालभगालशरावेषु द्विगौ" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'पञ्चारत्निः' इति अत्र पञ्चन् शब्द आद्युदात्तो, वर्तते।

**पञ्चदिष्टिः** ( १९३२ )—अत्र "समासस्य" इति सूत्रेण नित्यान्तोदात्तत्वे प्राप्ते "दिष्टिवितस्त्योश्च" इति सूत्रेण वैकल्पिकपूर्वपदप्रकृतिस्वरे "पञ्चदिष्टिः" इति पक्षेऽन्तोदात्ते 'पञ्चदिष्टिः' इति रूपद्वयम् भवति ।

**साङ्काश्यसिद्धः**—( १९३३ )—"वुञ्छण्" इत्यादिसूत्रेण सङ्काशशब्दात् ण्यप्रत्ययेऽन्तोदात्तेऽनुबन्धलोपे आद्यचो वृद्धौ अकारस्य लोपे च ततः समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात्" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'साङ्काश्यसिद्धः' इति भवति । पूर्वपदन्त्वन्तोदात्तम् ।

**भ्राष्ट्रपकः** ( १९३५ )—ष्ट्रन्नन्तभ्राष्ट्रशब्दः नित्त्वादाद्युदात्तः ततश्च समासे "समासस्य" इत्यन्तोदात्ते प्राप्ते तम्प्रबाध्य "सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'भ्राष्ट्रपकः' इति भवति ।

**श्वाफल्कचैत्रकाः** ( १९४६ ) अत्र द्वन्द्वसमासे 'श्वफल्कचैत्रकाभ्यामण्' इत्यणि णित्वादाद्यचो वृद्धावाद्युदात्तत्वे "समासस्य" इत्यन्तोदात्ते प्राप्ते तम्प्रबाध्य "राजन्यबहुवचनद्वन्द्वेन्धकवृष्णिषु" इति सूत्रेण पूर्वपदप्रकृतिस्वरे जाते 'श्वाफल्कचैत्रकाः' इति भवति ।

**द्वादश** ( १९५१ )—द्वौ च दश च द्वादश इति द्वन्द्वे समासे "द्व्यष्टनः संख्यायाः" इति सूत्रेणात्वे द्वादश इत्यत्र समासे सति "समासस्य" इत्यन्तोदात्तत्वे प्राप्ते तम्प्रबाध्य "सङ्ख्या" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'द्वादश' इति भवति ।

**पाणिनीयरौढीयाः** ( १९३६, ४१, ४४, ४५ )—पाणिनेः रौढेश्च छात्राः इति पाणिनीया रौढीयाः, पाणिनीयाश्च रौढीयाश्च इति पाणिनीयरौढीयाः अत्र पाणिनिरौढिशब्दाभ्यां "वृद्धाच्छः" इति सूत्रेण छप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण छस्येयादेशे इकारस्य लोपे छस्वरेण मध्योदात्तयोः पाणिनीयाश्च रौढीयाश्चेति द्वन्द्वसमासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "आचार्योपसर्जनश्चान्तेवासिनि" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'पाणिनीयरौढीयाः' इति भवति । अत्र रौढिशब्दात् "इञश्च" इत्यण्न "नद्व्यचः प्राच्यभरतेषु इति तन्निषेधात् ।

**महान्व्रीहि०**—(१९४९) "महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु" इति सूत्रस्वरूपम् । महच्छब्दः प्रकृत्या व्रीह्यादिषु दशसु परेषु इत्यर्थः ।

**महाव्रीहिः**—(१६३१) महांश्चासौ व्रीहिरिति विग्रहे समासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि "आन्महतः समानाधिकरणजातीययोः" इति सूत्रेणात्वे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु", इति सूत्रेण व्रीहिपरे महच्छब्दस्य प्रकृतिभावे 'महाव्रीहिः' इति भवति ।

**महावैश्वदेवम्**—(१९५०) अत्र "वर्तमाने पृषन्महत०" इत्यत्र तथा निपातनात् महच्छब्दोऽन्तोदात्तः ततश्च समासे "आन्महतः" इत्यात्वे "समासस्य" इत्यन्तोदात्ते प्राप्ते तम्प्रबाध्य "क्षुल्लकस्य वैश्वदेवे" इति सूत्रेण पूर्वपदप्रकृतिस्वरे "महावैश्वदेवम्" इति ।

कुरुगार्हपत०—(१९४०), ४९ "कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलो दासीभाराणाञ्च" इति सूत्रस्वरूपम् । एषां सप्तानां समासानां दासीभारादेश्च पूर्वपदं प्रकृत्या स्यात् इत्यर्थः ।

**रिक्तगुरुः**—(१९४२) रिक्तो गुरुः रिक्तगुरुरत्र "रिक्ते विभाषा" इति सूत्रेण रिक्तशब्दः आद्युदात्तः ततश्च समासानन्तरं "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बलो दासीभाराणाञ्च" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'रिक्तगुरुः' इति भवति ।

**पारेवडवा**—(१९४४) पारेवडवा अत्र निपातनादिवार्थे समासे विभक्त्यलोपे च पारशब्दः घृतादित्वादन्तोदात्तः । ततश्च समासानन्तरं "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "कुरुगार्हपत" इत्यादिसूत्रेण पूर्वपदप्रकृतिस्वरे 'पारेवडवा' इति भवति ।

**पण्यकम्बलः**—(१९२७) अत्र प्रयोगे "अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु" इति सूत्रेण निष्पन्नस्य पण्यशब्दस्य "यतोऽनावः" इति सूत्रेणाद्युदात्तत्वे पण्यश्चासौ कम्बलः पण्यकम्बल इति समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बलो दासीभाराणाञ्च" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'पण्यकम्बलः' इति भवति ।

**यूपदारु**—(१९३३, ४५) यूपाय दारु इति यूपदारु अत्र समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "चतुर्थी तदर्थे" इति सूत्रेण चतुर्थ्यन्तपूर्वपदस्य पूर्वपदप्रकृतिस्वरे 'यूपदारु' इति भवति । अत्र निदिति दीर्घश्चेत्यनुवर्तमाने "कुयुभ्यां च" इति सूत्रेण पप्रत्यये दीर्घे च निष्पन्नयूपशब्दः नित्त्वादाद्युदात्तः इति बोध्यम् ।

गोहितम् (१९२६)—गवे हितम् इति गोहितमत्र समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "क्तेच" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'गोहितम्' इति भवति।

श्रेणिकृताः (१९४३)—अत्र श्रेणिशब्दस्याद्युदात्तस्य कर्मधारयसमासे "समासस्य" इत्यन्तोदात्तत्वे प्राप्ते तम्प्रबाध्य "कर्मधारयेऽनिष्ठा" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'श्रेणिकृताः' इति भवति।

त्वोतासः (१९२८, ४१)—अत्र त्वयाऊताः=रक्षिताः त्वोतासः। मपर्यन्तस्य "प्रत्ययोत्तरपदयोश्च" इति त्वादेशे छान्दसत्वाद्दकाराकारलोपे ऊता इति अवतेः क्तं "ज्वरत्वर" इत्यादिनोठि "एत्येधत्यूठ्सु" इति सूत्रेण छान्दसत्वाद् वृद्धेरिडागमस्य-चाभावे जसि "आज्जसेरसुक्" इत्यसुगि "तृतीया कर्मणि" इति सूत्रेण पूर्वपदप्रकृतिस्वरे "एकादेश उदात्तेनोदात्तः" सूत्रेण उदात्तत्वे ततः स्वरितप्रचये जाते 'त्वोतासः' इति भवति।

रुद्रहतः (१९३८)—रुद्रेण हतः 'रुद्रहतः' इति समासे "समासस्य" इत्यन्तोदात्ते प्राप्ते "तृतीया कर्मणि" इति पूर्वपदप्रकृतिस्वरे 'रुद्रहतः' इति भवति, अत्र रुद्रशब्दः रगन्तत्वेनान्तोदात्तः।

गतिरनन्तरः (१९५१)—कर्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या स्यादित्यर्थः। पुरोहितम्। इत्युदाहरणम्।

पुरोहितम् (१९३६, ३७, ४२, ४७, ५१)—अत्र "पूर्वाधरावराणामसि पुरधवश्चैषाम्" इत्यसिप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः पुरःशब्दः। हितशब्दोपि धाञोनिष्ठायां "दधातेर्हिः" इति सूत्रेण ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः। "पुरोऽव्ययम्" इति गतिसंज्ञायां "कुगतिप्रादय" इति समासे समासान्तोदात्ते "तत्पुरुषे तुल्यार्थ" इत्यव्ययपूर्वपदप्रकृतिस्वरे, कृत्स्वरे, थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते "गतिरनन्तरः" इति पूर्वपदप्रकृतिस्वरः।

गतिरनन्तरः। अत्रानन्तरग्रहणफलम् (१९४०)—"गतिरनन्तरः" इति सूत्रस्यानन्तरग्रहणफलमाह—'अभ्युद्धृतः' इति, इह च हृतशब्दस्य उच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाद्युदात्त उद्धृतशब्दः तस्य पुनरभिशब्देन समासः। तस्य "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" इति परिभाषया उद्धृतशब्दः क्तान्तः उत्तरपदम्। एवं समासान्तोदात्तत्वे प्राप्ते तद्बाधकाव्ययपूर्वपदप्रकृतिस्वरे

तदपवादे कृत्स्वरे तदपवादस्थाथादिस्वरः प्राप्तस्तमपोह्याभेरयं स्वरः स्यात् सोऽनन्तरग्रहणेन वार्यते ।

नन्वनन्तरग्रहणेनाप्यसौ दुर्वारः कृद्ग्रहणपरिभाषयोद्धृतशब्दस्य क्तान्तत्वेऽभेस्तदानन्तर्यसत्वादिति चेन्नैवम् । अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरा गतिराश्रीयते अभिश्च न तथा ।

नन्वेवं मा भूदभेः स्वरः इष्टसिद्धिस्तु कथम् ? अभ्युद्धृतशब्दे हि उच्छब्दस्य-स्वरः इष्यते "संसृष्टं धनमुभयं समाकृतम्" इति मन्त्रे समाकृतशब्दे आङः स्वरदर्शनात् । न चासौ प्रकृतसूत्रेण सिद्धयति प्रथमसमासे तत्प्रवृत्तावपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तेरुक्तत्वात्, न च तं बाधित्वा गतिस्वरः प्रवर्तते इति वाच्यम् द्वितीयसमासे उदः पूर्वपदत्वाभावात् । अत्रोच्यते धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरोऽयं प्रवर्तते नहि क्तप्रकृतिभूतं धातुम्प्रति पूर्वपदत्वं गतेः सम्भवति तस्मादभ्युद्धृते, समासकृतम् इति तावत्सुस्थम् ।

**दूरादागतः**—( १९३० )—अत्र प्रयोगे थ, अथ, घञ, क्त, अच् , अप् , इत्र, क, एतदन्तानां गतिकारकोपपदात् परेषामन्त उदात्तः स्यादित्यर्थक "थाथघञ्क्ताजबित्रकाणाम्" इति सूत्रेणान्तोदात्ते दूरादागतः' इति भवति ।

**तवै चान्तश्च युगपत्**—(१९३८) तवैप्रत्ययान्तस्यान्त उदात्तो गतिश्चानन्तरः प्रकृत्या युगपच्चैतदुभयं स्यादित्यर्थः । अन्वे तुवा उ । इत्युदाहरणम् ।

**अन्वेतवा उ** ( १९४५, ४८ )—अत्र "उपसर्गाश्चाभिवर्जम्" इति सूत्रेण 'अनु" राद्युदात्तः । "तवै चान्तश्च युगपत्" इति सूत्रेण तवैप्रत्ययान्तस्यान्त उदात्तः गतिश्चानन्तरःप्रकृत्या युगपच्चैतदुभयम् जातम् ।

**द्विसुवर्णधनम्** ( १६४० )—द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णं तदेव धनं द्विसुवर्णधनमत्र समासानन्तरं "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "हिरण्यपरिमाणं धने" इति सूत्रेण वैकल्पिकपूर्वपदप्रकृतिस्वरे 'द्विसुवर्णधनम् इति। पक्षे समासस्वरेऽन्तोदात्ते 'द्विसुवर्णधनम्' इति भवति ।

**प्रथमवैयाकरणः** (१९४५)—अत्र प्रथमशब्दः [प्रथेरमजन्तः समासे "समासस्य" इत्यन्तोदात्ते प्राप्ते "प्रथमोऽचिरोपसम्पत्तौ" इति सूत्रेण प्रथमशब्दस्य विभाषया प्रकृतिभावे 'प्रथमवैयाकरणः' इति भवति सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः ।

यत्र वैयाकरणानामाद्यः मुख्यो वा यः स प्रथमवैयाकरणः एवमर्थः क्रियते तत्र 'प्रथमवैयाकरणशब्दः नित्यमन्तोदात्त एवेति बोध्यम् ।

**आर्यकुमारः** (१९२९)—आर्यश्चासौ कुमार इति विग्रहे कर्मधारयसमासे सुपोलुकि "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्तेतम्प्रबाध्य "आर्यो ब्राह्मणकुमारयोः" इति सूत्रेण पूर्वपदस्य आर्यशब्दस्य वैकल्पिकप्रकृतिभावे ततश्च आर्यशब्दस्य ण्यदन्तत्वादन्तस्वरिते 'आर्यकुमारः' इति भवति ।

**आर्यब्राह्मणः** ( १९३५, ३८ )—आर्यशब्दस्य ण्यदन्तत्वात् "तित्स्वरितम्" इति सूत्रेणान्तस्वरितत्वे आर्यश्चासौ ब्राह्मणः इति कर्मधारयसमासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते ब्राह्मणकुमारयोरुत्तरपदयोरार्यः पूर्वपदं प्रकृतिस्वरं वा स्यात् कर्मधारये इत्यर्थक "आर्यो ब्राह्मणकुमारयोः" इति सूत्रेण प्रकृतिस्वरे 'आर्यब्राह्मणः' पक्षे आर्यब्राह्मणः इति भवति ।

**राजब्राह्मणः** (१९५२)—अत्र राजन्शब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः ततश्च कर्मधारये समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "राजा च" इति प्रकृतिभावे 'राजब्राह्मणः' इति भवति ।

**राजप्रत्येनाः** ( १९५० )—अत्र प्रतिगतमेनः पापं यस्य सः प्रत्येनाः राज्ञः प्रत्येनाः राजप्रत्येनाः इति विग्रहे समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "षष्ठी प्रत्येनसि" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'राजप्रत्येनाः' इति भवति ।

**ग्रामनापितः** (१९४६)—अत्र षष्ठीसमासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते "ग्रामः शिल्पिनि" इति सूत्रेण विभाषया पूर्वपदप्रकृतिस्वरे 'ग्रामनापितः' इति भवति ।

**वैयाकरणहस्ती** ( १९४४ )—अत्र "सप्तमीहारिणौ धर्म्येऽहरणे" इति सूत्रेणाद्युदात्तः ।

**गवाध्यक्षः** (१९४७)—अत्र "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्तेतम्प्रबाध्य "विभाषाध्यक्षे" इति सूत्रेण पूर्वपदमाद्युदात्तम् ।

**गोत्रान्तेवासिमाणव०** (१९३६)—"गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे" इति सूत्रस्वरूपम् । गोत्रवाचिनि, अन्तेवासिनि चोत्तरपदे माणवब्राह्मणयोश्च क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् इत्यर्थः । भार्यासौश्रुतः । कुमारीदाक्षाः । ओदनपाणिनीयाः । भिक्षामाणवः । भयब्राह्मणः । इत्युदाहरणानि ।

**भार्यासौश्रुतः** ( १९३९ )—सुष्ठु शृणोति इति सुश्रुत् तस्यापत्यं सौश्रुतः। भार्याप्रधानः सौश्रुतः इति विग्रहे शाकपार्थिवादित्वादुत्तरपदलोपिसमासे "गोत्राऽन्तेवासिमाणवब्राह्मणेषु क्षेपे" इति सूत्रेण पूर्वपदस्याद्युदात्तत्वे 'भार्यासौश्रुत' इति भवति।

**दन्तलेखकः**(१९४३)—अत्रस्थस्य लेखकशब्दस्य "ण्वुल्तृचौ" इति ण्वुल्प्रत्यये ऽकादेशे यस्य दन्तलेखनेन जीविका इत्यर्थे "नित्यं क्रीडेति" समासे 'समासस्य" इत्यन्तोदात्ते प्राप्ते "अके जीविकार्थे" इति सूत्रेण पूर्वपदस्याद्युदात्तत्वे 'दन्तलेखकः' इति भवति।

**उद्दालकपुष्पभञ्जिका** ( १९३७, ४५ )—अत्र "नित्यं क्रीडे"ति समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य प्राग्देशवाचिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यादित्यर्थक "प्राचां क्रीडायाम्" इति सूत्रेणाद्युदात्तत्वे "उद्दालकपुष्पभञ्जिका' इति भवति।

**तन्तुवायः** (१९२७, २८, ३३)—अत्र प्रयोगे 'वे' धातोः "ह्वावामश्च" इत्यणि आत्वे अनुबन्धलोपे युगागमेऽनुबन्धलोपे समासे "शिल्पिनि चाकृञः" इति सूत्रेणाद्युदात्तत्वे 'तन्तुवायः' इति भवति।

**गोपालः** ( १९३२ )—गाः पालयतीति 'गोपालः' इत्यत्र "गोतन्तियवं पाले" इति सूत्रेण पालशब्दे परे आद्युदात्तत्वे 'गोपालः' इति।

**उष्ट्रक्रोशी** (१९३५, ३८ )—अत्र प्रयोगे "उपमानं शब्दार्थप्रकृतावेव" इति सूत्रेण क्रोशीति णिन्यन्ते उत्तरपदे परे उपमानवाचिनः पूर्वपदस्योष्ट्र इत्यस्याद्युदात्तत्वे 'उष्ट्रक्रोशी' इति भवति।

**उपमानंशब्दार्थप्रकृतावेवात्रप्रकृतिग्रहणप्रयोजनम्** (१९३४, ४४)—"उपमानं शब्दार्थप्रकृतावेव" इति सूत्रेऽसति प्रकृतिग्रहणे शब्दार्थात् परो यो णिनिस्तदन्ते उत्तरपदे आद्युदात्तं स्यात् इत्यर्थो विज्ञायेत तथा च यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात् परो णिनिस्तत्रापि स्यात्। "कृद्ग्रहणे गतिकारकपूर्वपदस्यापि ग्रहणम्" इति परिभाषया णिन्नन्तोत्तरपदत्वाऽनपायात्। प्रकृतिग्रहणे तु न भवति। योऽत्र धातुर्नासौ शब्दार्थः यश्च शब्दार्थो धातूपसर्गसमुदायो न ततो णिनिर्विहितः इति भावः। इत्यभिप्रायेणाह कौमुद्यां प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था तत्रैव यथा स्यात् इह मा भूत्-गर्दभोच्चारीति।

**युक्तारोही** ( १९२९ )—अत्र प्रयोगे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "युक्तारोह्यादयश्च" इति सूत्रेणाद्युदात्ते 'युक्तारोही' इति भवति ।

**मल्लग्रामः** ( १९१ )—मल्लानां ग्राम इति विग्रहे समासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "ग्रामेऽनिवसन्तः" इति सूत्रेण ग्रामे परे पूर्वपदस्योदात्तत्वे 'मल्लग्रामः' इति भवति ।

**ब्रह्मनगरम्** (१६३६)—अत्र प्रयोगे "अमहन्नवं नगरेऽनुदीचाम्" इति सूत्रेण नगरे परे पूर्वस्याद्युदात्ते 'ब्रह्मनगरम्' इति भवति ।

**अधिकार्मम्** ( १९४२ )—अत्र प्रयोगे 'अर्मे चाऽवर्णं द्व्यच् त्र्यच्' इति सूत्रेण आद्युदात्ते प्राप्ते "न भूताधिकसञ्जीवमद्राश्मकज्जलम्" इति निषेधे 'समासस्य' इत्यन्तोदात्ते 'अधिकार्मम्' इति भवति ।

**गुडोदकम्** (१९४७)—गुडमिश्रमुदकम् गुडोदकम् अत्र प्रयोगे "उदकेऽकेवले" इति सूत्रेण पूर्वपदस्यान्तोदात्त स्वरे कृते चैकादेशे "स्वरितो वाऽनुदात्ते पदादौ" इति विभाषया स्वरिते 'गुडोदकम्' इति भवति ।

**स्त्रीसभम्** (१९३३)—अत्र "सभायां नपुंसके" इति सूत्रेण पूर्वपदस्यान्तोदात्तत्वे 'स्त्रीसभम्' इति भवति ।

**नान्दीपुरम्** (१६५२)—अत्र प्रयोगे "पुरे प्राचाम्" इति सूत्रेण पूर्वपदस्यान्तोदात्तत्वे 'नान्दीपुरम्' इति भवति ।

**फकलपुरम्** (१६३०)—इत्यत्र "पुरे प्राचाम्" इति पुरे परेऽन्तोदात्तत्वे प्राप्ते "न हास्तिनफलकमार्देयाः" इति सूत्रेण तन्निषेधे "समासस्य" इति सूत्रेणान्तोदात्तत्वे 'फलकपुरम्' इति भवति ।

**आचार्योपसर्जनश्चान्तेवासिनि**(९९३३, ३७)—आचार्योपसर्जनान्तेवासिनि परे दिक्च्छब्दाः अन्तोदात्ताः भवन्ति इत्यर्थः । पूर्वपाणिनीयाः इत्युदाहरणम् ।

**उत्तरपदवृद्धौ सर्वं च** (१६२७)—उत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्वशब्दो दिक्शब्दश्चान्तोदात्तो भवति । तेन 'सर्वपाञ्चालकः' अपरपाञ्चालकः इति । अत्र उत्तरपदस्याधिकाराभावे 'सर्वभासः' 'सर्वकारकः' इत्यत्र दोषापत्तिरिति ।

**अपरकृष्णमृत्तिका** (१९४६)—अत्र प्रयोगे "दिक्सङ्ख्ये संज्ञायाम्" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य दिक्शब्दाः पूर्वपदानि अन्तोदात्तानि स्युर्ग्रामा-

दिषूत्तरेषु इत्यर्थक "दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु" इति सूत्रेण पूर्वपदस्य दिक्शब्दवाचकस्यान्तोदात्ते 'अपरकृष्णमृत्तिका' इति भवति।

सर्वपाञ्चालकः (१९४१)—अत्र प्रयोगे "उत्तरपदवृद्धौ सर्वं च" इति सूत्रेण सर्वशब्दस्यान्तोदात्तत्वे "सर्वपाञ्चालकः' इति भवति।

विश्वकर्मा (१९३७)—विशेः क्विन् नित्त्वादाद्युदात्ते ततश्च बहुव्रीहिसमासे संज्ञात्वात् "बहुव्रीहौ विश्वं संज्ञायाम्" इति सूत्रेण पूर्वपदभूतस्य विश्वशब्दस्यान्तोदात्तत्वे-'विश्वकर्मा' इति भवति।

विश्वेदेवाः (१९३४)—अत्र "समासस्य" इति सूत्रेणप्राप्तमन्तोदात्तम्बाधित्वा पूर्वपदप्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादभूतेन "बहुव्रीहौ विश्वं संज्ञायाम्" इति सूत्रेण पूर्वपदभूतस्य विश्वशब्दस्यान्तोदात्ते 'विश्वदेवाः' इति भवति।

अविश्वदेवं सत्पतिम् (१९४२)—अत्रापि "समासस्य" इति सूत्रेण प्राप्तमन्तोदात्तम्बाधित्वा पूर्वपदप्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादभूतेन "बहुव्रीहौ विश्वं संज्ञायाम्" इति सूत्रेण पूर्वपदभूतस्य विश्वशब्दस्यान्तोदात्तत्वे 'अविश्वदेवं सत्पतिम्' इति भवति।

वृकोदरः (१९३८, ४४)—वृकस्येवोदरमस्येति वृकोदरः अत्र पूर्वपदप्रकृतिस्वरं बाधित्वा "उदराश्वेषुषु" इति सूत्रेण पूर्वपदस्यान्तोदात्तत्वे 'वृकोदरः' इति भवति।

प्रधौतपादः (१९३६, ४२)—गतिशुद्ध्यर्थक-उकारेत्संज्ञकप्रपूर्वकधाव्धातोः निष्ठाक्तप्रत्यये ऽनुबन्धलोपे "च्छ्वोः शूडनुनासिके च" इति सूत्रेणोठि "एत्येधत्यूठ्सु" इति सूत्रेण वृद्धौ प्रधौतशब्दस्य गतिस्वरेणाद्युदात्तत्वे 'प्रधौतपादः' इत्यत्र "निष्ठोपसर्गपूर्वमन्यतरस्याम्" इति सूत्रेण निष्ठान्तपूर्वपदस्यान्तोदात्तत्वे 'प्रधौतपादः' इति भवति। अन्तोदात्तत्वाभावपक्षे 'प्रधौतपादः' इति भवति।

मत्स्यचूर्णम् (१९२७)—अत्र मत्स्यस्य चूर्णमिति षष्ठीसमासे "समासस्य च" इति सूत्रेणान्तोदात्ते 'मत्स्यचूर्णम्' इति भवति। "चूर्णादीन्यप्राणिषष्ठ्याः" इति सूत्रेऽप्राणिषष्ठ्याः इत्युक्तत्वात् नात्र षष्ठ्यन्तात्परस्य चूर्णस्याद्युदात्तत्वम्।

काण्डपृष्ठः (१९२८)—कण्ठादीन्युत्तरपदानि संज्ञौपम्ययोराद्युदात्तानि स्युर्बहुव्रीहौ इत्यर्थक "कण्ठपृष्ठग्रीवाजङ्घंच" इति सूत्रेणाद्युदात्ते 'काण्डपृष्ठः' इति भवति।

सुग्रीवः (१९३२)— अत्रापि "कण्ठपृष्ठग्रीवाजङ्घञ्च" इति सूत्रेण उत्तरपदस्याद्युदात्तत्वे 'सुग्रीवः' इति भवति।

साम्राज्याय सुक्रतुः (१९४८,५०)—अत्र प्रयोगे "क्रत्वादयश्च" इति सूत्रेण सोः परे आद्युदात्ते 'साम्राज्याय सुक्रतुः' इति भवति।

सुवीरेण (१९३०)—अत्र "वीरवीर्यौ च" इत्यनेन सूत्रेणाद्युदात्ते 'सुवीरेण' इति भवति।

उपकूलम् (१९३१, ३५)—कूलस्य समीपमुपकूलमिति विग्रहे अव्ययीभावसमासे कूलादीन्युत्तरपदान्याद्युदात्तानि स्युः इत्यर्थक "कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे" इति सूत्रेणाद्युदात्तत्वे 'उपकूलम्' इति भवति।

उपशालम् (१९३९)—अत्रापि पूर्ववदव्ययीभावसमासे "कूलतीरतूलमूलशालाक्षसममव्ययीभावे" इति सूत्रेणोत्तरपदस्याद्युदात्तत्वे 'उपशालम्' इति भवति।

प्रजाकाण्डम् (१९४१)— अत्र उपमितं व्याघ्रादिभिरिति समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "चेलखेटकटुककाण्डं गर्हायाम्" इति सूत्रेण काण्डस्याद्युदात्तत्वे 'प्रजाकाण्डम्' इति भवति।

दाण्डायनस्थलम् ( १९२६ )—अत्र प्रयोगे "कूलसूदस्थलकर्षाः संज्ञायाम्" इति सूत्रेणाद्युदात्ते 'दाण्डायनस्थलम्' इति।

शितिपादः ( १९४० )—अत्र शितिरिति 'वर्णानां तणतिनितान्तानाम्' इति सूत्रेणाद्युदात्तः पादशब्दश्च वृषादित्वात् "वृषादीनां च" इति सूत्रेणाद्युदात्तोऽत्र समासे सति "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "शितेर्नित्याऽबह्वज्बहुव्रीहावभसत्" इति सूत्रेण शितेः परस्यः नित्याबह्वचः उत्तरपदस्य प्रकृतिस्वरे 'शितिपादः' इति भवति।

उच्चैः कारम् ( १९५२ )—अत्र "गतिकारकोपपदात् कृत्" इति सूत्रेण "समासस्य" इति प्राप्तम्बाधित्वा प्रकृतिस्वरे 'उच्चैः कारम्' इति भवति।

"गतिकारकोपपदात् कृत्" अत्र कृद्ग्रहणफलम् (१९३२, ३६, ३८, ४५, ४८, ४९, ५१ )—अत्र सूत्रे कृद्ग्रहणङ्किमर्थम्। निर्गतः कौशाम्ब्याः निष्कौशाम्बिरित्यत्र माभूत्। नैतदस्ति। 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' भवन्ति। न च कौशाम्बीशब्दम्प्रति क्रियोयोगः कारकश्च क्रियायामेव सम्भवति। उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते। तदेवं गत्यादिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते, धातोश्च क्रियावाचित्वम् तस्माच्च द्वये प्रत्ययाः तिङ्कृतश्च, तत्र तिङन्तेन समासाभावात् कृदन्तमेव सम्भवति। 'अनुव्यचलत्' इत्यत्र तु न गतित्वनिबन्धनसमासः किं तर्हि "सुप" इति योगविभागात् समासः। तस्मा-

न्नार्थः कृद्ग्रहणेनेत्यत आह—"कृद्ग्रहणं विस्पष्टार्थम् इति" य एवं प्रतिवक्तुमसमर्थस्तं प्रति विस्पष्टार्थं क्रियते इत्यर्थः ।

ननु विस्पष्टार्थमपि क्रियमाणे कृद्ग्रहणे आमन्ते न प्राप्नोति प्रपचतितरामिति ततश्च समासस्वरं बाधित्वाऽव्ययस्वर एव स्यादत आह—'प्रपचतितरामित्यादि' इत्येके इत्यस्य कृद्ग्रहणं विस्पष्टार्थम् । आमन्ते च दोषाभाव इति केचिदाचार्या व्याचक्षते इति । प्रपचतिदेश्यार्थं त्विति । आदिशब्देन 'प्रपचतिकल्पम्' 'प्रपचतिदेशीयः' 'प्रपचतिरूपम्' इत्येतेषां त्रयाणां ग्रहणम् । प्रपचतिदेश्यादौ अर्थः प्रयोजनं यस्य तत् तथोक्तम् । अयमभिप्रायः न विस्पष्टार्थं कृद्ग्रहणम् । अपि तु प्रपचतिदेश्यादौ यत्र सति शिष्टं स्वरान्तरं नास्ति तत्रापि स्वरो माभूदव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं तत् प्रयोजनमाहुः ।

अत्र हरदत्तः—इदं तु वक्तव्यम् । प्रपचतितरामित्यादौ तरबन्तेन समासे पश्चादाम् भवन् प्रत्ययग्रहणपरिभाषया पचतितरस्यैव घान्तत्वात्तत एव स्यात् तत्र को दोषः सोपसर्गस्य घान्तस्यैकपद्याभावादाम् । प्रपचतितरां देवदत्तेत्यादावाम एकान्तरमामन्त्रितमनन्तिके इत्येष विधिर्न स्यात् शेषनिघातश्च प्रशब्दस्य न स्याद्भिन्नपदत्वात् । तस्मात् प्रशब्दस्यामन्तेन समासोऽङ्गीकर्तव्यो न तरबन्तेन । समासत्वात् समुदायस्य प्रातिपदिकत्वे विभक्तावैकपद्यं भवति, स्वरे तु दोषप्रसङ्गात् कृद्ग्रहणमपि त्यक्तव्यमिति भाष्ये स्थितम् । एवं स्थिते प्रपचतिदेश्यादौ का गतिरिति जानन्तु सुधियः ।

उभे वनस्पत्यादिषु युगपत् ( १९३४ )—एषु पूर्वोत्तरपदे युगपत् प्रकृत्या स्याताम् इत्यर्थः । वनस्पतिं वन आ । बृहस्पतिं यः । इत्युदाहरणम् ।

शचीपतिम् ( १९२८ )—अत्र षष्ठीसमासे "समासस्य" इत्यन्तोदात्ते प्राप्ते तम्प्रबाध्य "उभे वनस्पत्यादिषु युगपत्" इति सूत्रेण पूर्वोत्तरपदयोः युगपत् प्रकृतिभावेन तेन पतिरित्यत्र प्रत्ययस्वरेणाद्युदात्ते शचीत्यत्र शार्ङ्गरवादित्वात् ङीनि नित्त्वादाद्युदात्तत्वे 'शचीपतिम्' इति भवति ।

आप इन्द्रावरुणौ (१९४७, ४९)—अत्र द्वन्द्वसमासे "देवता द्वन्द्वे च" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "देवताद्वन्द्वे च' इति सूत्रेण युगपद् प्रकृतिभावे तेन "ऋजेन्द्राग्र" इति निष्पन्नः रनन्त इन्द्रशब्द "कॄवृदारिभ्य उनन्" इति निष्पन्नः वरुणशब्दश्च उभौ आद्युदात्तौ ।

**आवसथः (१६२९, ३२, ३८)**—आङुपसर्गपूर्वकवसधातोः "उपसर्गे वसेः" इति सूत्रेणाथप्रत्यये "थाऽथघञ्क्ताजबित्रकाणाम्" इति सूत्रेणान्तोदात्ते 'आवसथः' इति भवति।

**प्रक्षयः (१९४१)**—अत्र "एरच्" इति सूत्रेणाच्प्रत्यये गुणेऽयादेशे प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'प्रक्षयः' अत्रावस्थायां "थाऽथघञ्क्ताजबित्रकाणाम्" इति सूत्रेणान्तोदात्ते 'प्रक्षयः' इति निष्पन्नः।

न च क्षयशब्दस्याच्प्रत्ययान्तत्वात् कृदुत्तरपदप्रकृतिस्वरेणैवान्तोदात्तत्वं सिद्धम् इति वाच्यम्। "क्षयो निवासे" इति क्षयशब्दस्याद्युदात्तत्वात्।

**सुप्तप्रलपितम् (१९४६)**—अत्र प्रयोगे "इत्थं भूतेन कृतमिति च" इति सूत्रेण क्तान्तस्योत्तरपदस्य ( प्रलपितस्य ) अन्तोदात्तत्वे 'सुप्तप्रलपितम्' इति भवति।

**प्रमत्तगीतम् ( १९४१ )**—अत्रापि "इत्थं भूतेन कृतमिति च" इति सूत्रेण क्तान्तस्योत्तरपदस्य ( गीतस्य ) अन्तोदात्तत्वे साधु।

**अध्ययनपुण्यम् (१६३४, ४१)**—अध्ययने पुण्यमिति विग्रहे—'सुप्सुपा" इति सूत्रेण सप्तमीयोगविभागाद् वा समासे "सप्तम्याः पुण्यम्" इति सूत्रेण सप्तम्यन्तात्परस्य पुण्य इत्युत्तरपदस्यान्तोदात्तत्वे 'अध्ययनपुण्यम्' इति भवति।

**माषोनम् ( १९४३ )**—अत्र तृतीयातत्पुरुषसमासे "ऊनार्थकलहं तृतीयायाः" इति सूत्रेण तृतीयान्तात् परस्योनशब्दस्यान्तोदात्तत्वे 'माषोनम्' इति भवति।

**तिलमिश्राः (१९४४)**—अत्र तृतीयान्तात्परमनुपसर्गं मिश्रमन्तोदात्तं स्यादसन्धौ इत्यर्थक "मिश्रं "चानुपसर्गमसन्धौ" इति सूत्रेणान्तोदात्तत्वे 'तिलमिश्राः' इति भवति।

**अकार्णवेष्टकिकम् ( १९३० )**—'कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकम् न कार्णवेष्टकिकमकार्णवेष्टकिकम्' इत्यत्र 'सम्पादिनि" इति सूत्रेण ठञि प्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकत्वे "सुपोधातुप्रातिपदिकयोः" इति सूत्रेण सुपो लुकि "ठस्येकः" इति सूत्रेण ठस्येकादेशे "तद्धितेष्वचामादेः" इति सूत्रेणाद्यचो वृद्धौ कार्णवेष्टकिकशब्दः निष्पन्नः ततश्च नञ्समासे "नञो गुणप्रतिषेधे सम्पाद्यर्हहिताऽलमर्थास्तद्धिताः" इति सूत्रेणान्तोदात्ते "अकार्णवेष्टकिकम्' इति भवति।

**अतीक्ष्णम् ( १६२६ )**—इत्यत्र "विभाषा तृन्नन्नतीक्ष्णशुचिषु" इति सूत्रेण वैकल्पिकान्तोदात्तत्वे 'अतीक्ष्णम् इति। न तीक्ष्णमिति विग्रहः। पक्षे अव्ययस्वरः इति बोध्यम्।

तत्पञ्चमः ( १९४१ )—अत्र प्रयोगे "बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने" इति सूत्रेण तच्छब्दात् परस्योत्तरपदस्यान्तः उदात्तः ।

देवमित्रः (१९३१, ४१)—अत्र मित्राजिनयोरुत्तरपदयोरन्तः-उदात्तः स्यात् बहुव्रीहौ संज्ञायामित्यर्थक "संज्ञायां मित्राजिनयोः' इति सूत्रेणान्तोदात्ते 'देवमित्रः' इति भवति ।

कृष्णाजिनम् ( १९४० )—अत्र प्रयोगे मित्राजिनयोरुत्तरपदयोरन्त उदात्तः स्यादित्यर्थक "संज्ञायां मित्राजिनयोः" इति सूत्रेणान्तोदात्ते 'कृष्णाजिनम्' इति भवति ।

वस्त्रान्तरः ( १९२८ )—व्यवधानवाचकात् परमन्तरमन्तोदात्तमित्यर्थक "व्यवायिनोऽन्तरम्" इति सूत्रेणान्तोदात्तेऽस्मादेवज्ञापकात् अन्तरशब्दस्य परनिपाते 'वस्त्रान्तरः' इति भवति ।

गौरमुखः (१९३४, ४७)—गौरं ( गौरवर्णम् ) मुखं यस्यासौ गौरमुखः इत्यत्र "मुखं स्वाङ्गम्" इति सूत्रेण मुखमित्युत्तरपदस्यान्तोदात्ते 'गौरमुखः' इति भवति ।

प्रक्षालितमुखः ( १९२६, ४१ )—इत्यत्र "निष्ठोपमानादन्यतरस्याम्" इति सूत्रेण वैकल्पिकान्तोदात्तत्वे 'प्रक्षालितमुखः' इति । पक्षे निष्ठोपसर्ग इति पूर्वपदान्तोदात्तत्वम् । प्रक्षालितं मुखं येन यस्य वेति विग्रहः ।

दन्तजातः ( ११५१ )—अत्र समासे "वा जाते" इति सूत्रेण विभाषया जातशब्दस्यान्तोदात्ते जाते 'दन्तजातः' इति । पक्षे पूर्वपदप्रकृतिस्वरः तत्र दन्तशब्दस्य "स्वाङ्गशिटामदन्तानाम्" इति सूत्रेणाद्युदात्तत्वम् ।

बहुव्रीहिकः (१९३०)—अत्र बहुशब्दस्य "फिषोन्त उदात्तः" इति सूत्रेणान्तोदात्ते "बहोर्नञ्वदुत्तरपदभूम्नि" इति सूत्रेण नञः परस्योत्तरपदस्यैव स्वरविधानेन 'नञ्सुभ्याम्' इति सूत्रेणोत्तरपदस्यान्तोदात्ते बहुव्रीहिकः' इति भवति ।

तस्येदिमे प्रवणे (१९५०)—बहुव्रीहिसमासे तत्पुरुषे वा समासे "प्रनिरन्तः' इति णत्वे "समासस्य" इति बाधित्वा पूर्वपदप्रकृतिस्वरे प्राप्ते "वनं समासे" इति सूत्रेणोपसर्गादुत्तरपदस्य वनस्यान्तोदात्तत्वे 'तस्येदिमे प्रवणे' इति भवति ।

अन्तर्वणो देशः ( १९४३ )—इत्यत्र "अन्तः" इति सूत्रेण वनस्यान्तोदात्तत्वे "प्रनिरन्तः" इति णत्वे 'अन्तर्वणो देशः' इति भवति ।

पर्यन्तः ( १९३६ )—अत्र प्रयोगे "अन्तश्च" इति सूत्रेणान्तोदात्तः ।

निरुपलम् ( १९२९ )—निर्गतः उपलः यस्मात् अथवा निर्गतः उपलः इति

प्रादिसमासे सुपो लुकि निरुपलशब्दस्य "निरुदकादीनि च" इति सूत्रेणान्तोदात्ते 'निरुपलम्' इति भवति ।

**अनुज्येष्ठम्** ( १९२६ )—अनुगतो ज्येष्ठमनुज्येष्ठस्तम् अनुज्येष्ठम् इत्यत्र "अनोरप्रधानकनीयसी" इति सूत्रेणान्तोदात्तः ।

**अनुपुरुषः** ( १९३३ )—अन्वादिष्टः पुरुषः अनुपुरुषः इत्यत्र "पुरुषश्चान्वादिष्टः" इति सूत्रेणान्तोदात्ते 'अनुपुरुषः' इति ।

**अत्यङ्कुशो नागः** ( १९४० )—अङ्कुशमतिक्रान्त इत्यत्यङ्कुशो नाग इति विग्रहे समासे समासप्रयुक्तकार्ये 'अत्यङ्कुशः' इत्यत्र अतेः परमकृदन्तं परशब्दश्चान्तोदात्तः स्यादित्यर्थक-"अतेरकृत्पदे" इति सूत्रेणान्तोदात्ते 'अत्यङ्कुशोनागः' इति भवति ।

**प्रत्यंशुः** ( १९३५, ४६ )—प्रतिगतः अंशुरिति 'प्रत्यंशुः' अत्र प्रयोगे "प्रतेरंश्वादयस्तत्पुरुषे" इति सूत्रेण 'अंशु' इत्यस्यान्तोदात्तत्वे 'प्रत्यंशुः' इति भवति ।

**प्रतिजनः** ( १९३० )—इत्यत्र "प्रतेरंश्वादयस्तत्पुरुषे"; इति सूत्रेणान्तोदात्ते 'प्रतिजनः' इति भवति ।

**उपाजिनम्** ( १९४१ )—इत्यत्र "उपाद् द्व्यजजिनमगौरादयः" इति सूत्रेणोपात् परस्याजिनस्यान्तोदात्तत्वे 'उपाजिनम्' इति भवति ।

**विभाषोत्पुच्छे** (१९२७)—उच्छब्दात्परः पुच्छशब्दः अन्तोदात्तो वा स्यात् तत्पुरुषे इत्यर्थः । 'उत्क्रान्तः पुच्छादुत्पुच्छः' यदा तु पुच्छमुदस्यति उत्पुच्छयते "एरच्" उत्पुच्छस्तदा 'थाथादि' स्वरेण नित्यमन्तोदात्ते प्राप्ते विकल्पोयम् । सेयमुभयत्र विभाषा । तत्पुरुषग्रहणाभावे उदस्तं पुच्छं येन स 'उत्पुच्छः' इत्यत्र दोषापत्तिरिति तत्पुरुषग्रहणमिति ।

**त्रिपादूर्ध्वः** ( १९२८ )—त्रयः पादाः यस्येति त्रिपात् अत्र समासे "संख्यासुपूर्वस्य" इति सूत्रेण पादशब्दस्याकारस्य लोपे "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" इति सूत्रेणान्तोदात्ते 'त्रिपादूर्ध्वः' इति ।

**त्रिमूर्द्धानं सप्तरश्मिम्** ( १९४८ )—अत्रापि "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" इति सूत्रेणान्तोदात्ते 'त्रिमूर्द्धानं सप्तरश्मिम्' इति ।

**द्वित्रिभ्यां पद्दन्मूर्धसु बहुव्रीहौ** ( १९३५ )—अत्र सूत्रे 'मूर्धन्' इत्यकृतसमासान्त एव मूर्धन्शब्दः किमर्थमेतादृश उपादीयते इति, तस्यैतत्प्रयोजनम् असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकमनित्यः समासान्तो भवतीति । यद्यकृतसमासान्तस्योपादानम्, तर्हि यदा समासान्तः क्रियते तदा न

प्राप्नोति, कुतः शब्दान्तरत्वादितिचेन्न, बहुव्रीहिकार्यत्वात्, तदेकदेशत्वाच्च समासान्तेऽपि प्रवृत्तेः तस्य बहुव्रीहेरेकदेशः समासान्तस्तस्य भावस्तस्मात् । तदेवं बहुव्रीहिकार्यत्वात्तदेकदेशत्वेनाश्रयणात् समासान्तस्येति यदा समासान्तः क्रियते तदापि विधिरयं भवत्येवेति शम् ।

**चक्रसक्थः** ( १६४१ )—अत्र षजन्तः सक्थशब्दः तेन समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वं भवति । "सक्थं चाक्रान्तात्" इति सूत्रे आक्रान्तग्रहणाभावेऽत्रापि सूत्रमिदं प्रवर्तेत तथा च चित्त्वान्नित्यमन्तोदात्तत्वं बाधेतेत्याशयः इति शम् ।

**परादिश्च परान्तश्च** ( १६४३ )—परादिश्च परान्तश्च पूर्वान्तश्चापिदृश्यते ॥ पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यतः ॥ १ ॥

इति श्लोकवार्तिकम् । एतस्योदाहरणानि—क्रमशः बोध्यानि—'तुविजाता उरुक्षया' । 'नि येन मुष्टिहत्यया' । 'यत्रिचक्रः' । 'विश्वायुर्धेहि' । वस्तुतः परादिश्चेत्यस्योदाहरणं 'चोदयित्री सूनृतानाम्' इति विस्तरस्तु सुबोधिन्यां द्रष्टव्यः ।

इति समासस्वराः ।

## अथ तिङन्तस्वराः ।

**तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः** ( १९४०, ४२ )—ननु किं कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणम्, एतयोरर्थयोर्गोत्रादीनि भवन्ति तानि च तिङः पराण्यनुदात्तानि भवन्ति, आहोस्विदनुदात्तविशेषणं तिङः पराणिगोत्रादीन्यनुदात्तानि भवन्त्येतयोरर्थयोरिति । अस्मिन् विचारे निर्णयमाह—'कुत्सनाभीक्ष्ण्यग्रहणं' पाठविशेषणम् । अयं चार्थो योगविभागाल्लभ्यते । "तिङो गोत्रादीनि" इत्येको योगोऽनुदात्तविधानार्थः । "कुत्सनाभीक्ष्ण्ययोः" इति द्वितीयो योगः । गोत्रादीनीत्येव । परिभाषेयम्—इह शास्त्रे गोत्रादीनि कुत्सनाऽभीक्ष्ण्यविषयाण्येव ग्राह्याणि । तेनान्यत्रापि ( चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरित्यत्रापि ) गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयमिति शम् ।

**अग्निमीले** ( १९४७ )—अग्निशब्दः "फिषोन्त उदात्तः" इति सूत्रेणाथवा निप्रत्ययस्वरेणान्तोदात्तः, अम् सुप्त्वात् "अनुदात्तौ सुप्पितौ" इति सूत्रेणानुदात्तः "अमि पूर्वः" इति सूत्रकृतैकादेशः "एकादेश उदात्तेनोदात्तः"

नोदात्तः 'ईले' तु 'ईड' स्तुतौ लटि प्रथमपुरुषैकवचनम् प्रातिशाख्येन डस्य "तिङ्ङतिङः" इति सूत्रेणातिङन्तादग्निशब्दात् परस्य ईलेशब्दस्य निघातः त्तादनुदात्तस्य स्वरितः" इति ईकारस्य स्वरितत्वे 'अग्निमीले' इति। नच ऐण व्यवधानम् "स्वरविधौ व्यञ्जनमविद्यमानवत्" इति परिभाषणात्।

( अतः परं विशदविवेचना स्वरसंचारप्रक्रियास्थप्रयोगेऽवलोकनीया )

**नह भोक्ष्यसे ( १९३०, ४३ )**—इत्यत्र "तिङ्ङतिङः" इति सूत्रेण निघा- : प्राप्ते "नह प्रत्यारम्भे" इति तन्निषेधे "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधा- नुदात्तमह्न्विङोः" इति सूत्रेण से इत्यस्य निघाते ततश्च मध्योदात्ते पदे 'नह 'से' इति भवति।

**सत्यं भोक्ष्यसे (१९२९, ४४)**—अत्र "तिङ्ङतिङः" इति सूत्रेण निघाते प्राप्ते ं प्रश्ने" इति सूत्रेण तन्निषेधे 'सत्यं भोक्ष्यसे' इति। अत्र ( भोक्ष्यसे ) इति दात्तम्।

**आ हि ष्मा याति ( १९४८ )**—अत्र ष्माप्रयोगे छान्दसत्वात् दीर्घे षत्वे तत्वादनुदात्ते प्राप्ते "हि च" इत्यनेनानुदात्तस्य निषेधे 'आहिष्मा याति' इति। हिशब्दोवधारणे हेतौ चेति बोध्यम्।

**आ हि रुहन्तम् ( १९४९ )**—अत्रापि रुहन्तमित्यत्र 'हि च' इति सूत्रेणा- त्तस्य निषेधे 'आ हि रुहन्तम्' इति भवति।

**छन्दस्यनेकमपि साकाङ्क्षम्—( १९३८ )**—हीत्यनेन युक्तं साकाङ्क्षम- पि नानुदात्तं भवति। अनृतं हि मत्तो वदति पाप्मावैनं युनाति। दाहरणम्।

**यथा पचति शोभनम् ( १९२६ )**—अत्र "पूजायां नानन्तरम्" इति नानुदात्तस्वर एव।

**यावत् प्रपचति शोभनम् ( १९५० )**—अत्र हि 'पूजायां नानन्तरम्' स्योपरि "उपसर्गव्यपेतं च" इत्युक्तं तेनात्रापि बोध्यम्। ( 'अनुदात्तस्वर एव इत्यर्थः ) "पूजायां नानन्तरम्" इत्यनेनैव सिद्धे किमर्थमिदमिति वाच्यम् र्गव्यवधानार्थमस्यावश्यकत्वात्।

**अहो कटं करिष्यति ( १९२६ )**—अत्र प्रयोगे "शेषे विभाषा" इति सूत्रेण लेपकानुदात्तो भवति।

अधीष्व माणवक पुरा विद्योतते विद्युत् ( १९२७ )—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण प्राप्तं स्वरं बाधित्वा "पुरा च परीप्सायाम्" इति सूत्रेण वैकल्पिकानुदात्तत्वे "अधीष्व माणवक पुरा विद्योतते विद्युत्" इति। पक्षे द्योतते इति धातुस्वरेणाद्युदात्तत्वे "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" इति लसार्वधातुकनिघाते 'अधीष्व माणवक पुरा विद्योतते विद्युत्' इति भवति।

किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ( १९३५ )—क्रियाप्रश्ने वर्तमानेन किंशब्देन युक्तं तिङन्तं नानुदात्तं स्यादित्यर्थः। किं द्विजःपचत्याहोस्विद् गच्छति। इत्युदाहरणम्।

किं द्विजः पचत्याहोस्विद्गच्छति ( १९४८ )—अत्र प्रयोगे आहोस्विदेको निपात आद्युदात्तः ततः "किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्" इति सूत्रेणनिषेधे जाते ततो धातुस्वरेणाद्युदात्तत्वे किं द्विजः पचत्याहोस्विद्गच्छति' इति।

अत्र केचित् पूर्वं किं युक्तं तन्न निहन्यते उत्तरं तु न किं युक्तम् इति तन्निहन्यत एवेति। अन्ये तु यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योग इति उभयत्रापि निषेधेन भाव्यमिति।

अत्र हरदत्तः—अन्ये त्वाहुः पूर्वं किंयुक्तमिति ते मन्यन्ते—अस्तु द्वयोः संशयविषयत्वं किंशब्देन तु श्रुतक्रियाविषय एव प्रश्नो द्योत्यते। क्रियान्तरविषयस्तु प्रश्नः आहोस्विदित्यनेन क्रियाप्रश्न इति चोच्यते। तस्मात्तस्यैव निघातप्रतिषेध इति।

एहि मन्ये भक्तं भोद्यसे भुक्तं तत्त्वतिथिभिः ( १९४६ )—अत्र "एहि मन्ये प्रहासे लृट्" इति सूत्रेण एहि मन्ये इति युक्तस्य लृडन्तस्य पूर्ववज्जाते तत्सिद्धम्। अत्र मन्यसे भोक्ष्ये इत्यर्थे "प्रहासे च मन्योपपदे" इत्यादिना 'मन्ये भोक्ष्यसे' इति पुरुषव्यत्ययः।

जातु भोक्ष्यसे ( १९२७, २८, ३०, ४७ )—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण निघातस्वरे प्राप्ते "जात्वपूर्वम्" इति सूत्रेण तन्निषेधे "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" इति सूत्रेण से इत्यस्य निघाते मध्योदात्ते पदे जातुशब्दस्य निपातत्वात् "निपाता आद्युदात्ताः" इति सूत्रेणाद्युदात्तत्वे 'जातु भोक्ष्यसे' इति भवति।

कटं जातु करिष्यति ( १९२६ )—अत्र कटशब्दः फिट्त्वात् "फिषोऽन्त उदात्तः" इति सूत्रेणान्तोदात्तः। जातुशब्दो निपातत्वात् "निपाता आद्युदात्ताः"

इति सूत्रेणाद्युदात्तः करिष्यसि इत्यत्र "तिङ्ङतिङः" इति सूत्रेणानुदात्तः । "जात्वपूर्वम्" इति सूत्रेण निषेधस्तु न भवति सूत्रेऽपूर्वग्रहणात् ।

**कश्चिद् भुङ्क्ते** ( १९३३ )—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण निघातस्वरे प्राप्ते 'किं वृत्तं च चिदुत्तरम्" इति सूत्रेण तन्निषेधे 'कश्चिद् भुङ्क्ते' इति भवति ।

**आगच्छ देव ग्रामं प्रविश** ( १९२५ )—अत्र "लोट् च" इति सूत्रेण अनुदात्तत्वस्य निषेधे प्राप्ते तम्प्रबाध्य "विभाषितं सोपसर्गमनुत्तमम्" इति सूत्रेण वैकल्पिकानुदात्तत्वे तत् सिद्ध्यति । अत्र विशेति पक्षे निहतं पक्षे शप्रत्ययस्वरेणान्तोदात्तं, यदान्तोदात्तन्तदा "तिङि चोदात्तवति" इति सूत्रेण गतेर्निघातः ।

**हन्त प्रविश** ( १९२८, ३२, ५१ )—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण निघाते प्राप्ते तस्य "निपातैर्यद्यदि" इति नित्यनिषेधे प्राप्ते तम्प्रबाध्य 'हन्त च" इत्यनेन वैकल्पिकानुदात्तत्वे कृते 'हन्त प्रविश' इति । पक्षेऽन्तोदात्ते हन्त प्रविश' इति भवति ।

**हन्त कुरु** ( १९२९ )—अत्र "हन्त च" इति सूत्रेण वैकल्पिकानुदात्तस्य सोपसर्गे एव प्रवृत्तेरत्राप्रवृत्त्या 'निपातैर्यद्यदि' इति सूत्रेण निघातप्रतिषेधे 'हन्त कुरु' इति भवति ।

**आम् पचसि देवदत्ता३** ( १९२७, ४३, ४७ )—अत्र प्रयोगे "आमन्त्रितस्य च" इति सूत्रेण सर्वस्यानुदात्तत्वे प्राप्ते "आम एकान्तरमामन्त्रितमनन्तिके" इति निषेधे "आमन्त्रितस्य च" इति सूत्रेणामन्त्रितस्याद्युदात्तत्वे "आम्पचसि देवदत्ता ३' इति भवति ।

**यद्वितुपरं छन्दसि** ( १९३१ )—इति सूत्रस्वरूपम् । धकारयकारपूर्वो योऽन्त्योच् स उदात्तः स्यात् इत्यर्थः । अन्तर्द्धा । छाया । माया । जाया । इत्युदाहरणानि ।

**देवः पचतीव**—( १९२६ )—अत्र देव इत्यस्य "फिषोन्त उदात्तः" इति सूत्रेणान्तोदात्ते ततश्चानुदात्तत्वे प्राप्ते "चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः" इति सूत्रेण निषेधे 'देवः पचतीव' इति भवति ।

**देवः पचति च खादति च** ( १९४२ )—अत्रापि पूर्ववत्कार्ये जातेऽनुदात्तत्वे प्राप्ते "चादिषु च" इति सूत्रेण निषेधे तत्सिद्धम् ।

**हेति क्षियायाम्** ( १९२५ )—हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता स्यात्

क्षियायाम् धर्म्मव्यतिक्रमे इत्यर्थः । उदाहरणञ्चात्र—'स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति, उपाध्याये पदातौ गच्छति सति शिष्यस्य रथेन गमनं प्रतिषिद्धमिति धर्मव्यतिक्रमः ।

**उपाध्यायं पदातिं गमयति** ( १६४६ )—अत्र "हेति क्षियायाम्" इति सूत्रेण हयुक्ततिङन्तस्यै निषेधेन 'उपाध्यायं पदातिं गमयति' इत्यत्र निषेधाभावात् 'तिङ्ङतिङ इति निघातो भवति । उपाध्याये पदातौ गच्छति सति शिष्यस्य रथेन गमनं प्रतिषिद्धमित्याचारभेदः ।

**वैवावेति च छन्दसि** ( १९२५ )—आभ्यां युक्तं प्रथमं तिङन्तमनुदात्तं वा स्याच्छन्दसि । वै स्फुटार्थे क्षमायाञ्च वाव प्रसिद्धौ स्फुटार्थे च उदाहरणञ्चात्र 'अहर्वै देवानामासीत्' 'अयं वाव हस्त आसीत्' ।

**अहर्वै देवानामासीत्** ( १६४७ )—अत्र "तिङ्ङतिङः" इति सूत्रेण प्राप्तनिघातम्बाधित्वा "वैवावेति च छन्दसि" इति सूत्रेण वैयुक्तस्य तिङन्तस्य विभाषयानुदात्तत्वे 'अहर्वै देवानामासीत्' इति भवति ।

**अयं वाव हस्त आसीत्** ( १९२७–५० )—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण निघाते प्राप्ते तम्प्रबाध्य 'आभ्यां युक्तं प्रथमं तिङन्तमनुदात्तं वा स्याच्छन्दसि' इत्यर्थक "वैवावेति च छन्दसि" इति सूत्रेण विभाषयानुदात्तत्वे 'अयं वाव हस्त आसीत्' इति भवति ।

**अजामेकां जिन्वति** ( १६४४, ४६ )—अत्र प्रयोगांशे जिविः प्रीणनार्थः तेन इदित्वान्नुम् । लटि तिपि शपि 'जिन्वति' इति । ततोऽनुदात्तत्वे प्राप्ते "एकान्याभ्यां समर्थाभ्याम्" इति सूत्रेण निषेधे 'अजामेकां जिन्वति' इति भवति ।

**प्रजामेकां रक्षति** ( १९२६ )—अत्रानुदात्तत्वे प्राप्ते "एकान्याभ्यां समर्थाभ्याम्" इति सूत्रेण निषेधे 'प्रजामेकां रक्षति' इति भवति ।

**यो भुङ्क्ते** ( १९३१ )—अत्र य इति प्रातिपदिकस्वरेणान्तोदात्तः ततश्च "तिङ्ङतिङः" इति सूत्रेण निघाते प्राप्ते "यद्वृत्तान्नित्यम्" इति सूत्रेणानुदात्तनिषेधे 'यो भुङ्क्ते' इति भवति ।

**पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः** ( १९२५ )—पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तं स्यात् इत्यर्थः । उदाहरणञ्चात्र–'काष्ठाध्यापकः' काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचनाः भवन्ति ।

**काष्ठाध्यापकः** ( १९३०, ३१, ४२, ५१ )—इत्यत्र "मयूरव्यंसकादयश्च"

इति समासे काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचनाः भवन्ति तेन "पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः" इति सूत्रेण अनुदात्तत्वे 'काष्ठाध्यापकः' इति भवति।

**पूजनात् पूजित० अत्र पूजितग्रहणप्रयोजनम्** (१९३७)—पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः इति सूत्रस्वरूपम्। पूजनस्य पूजितापेक्षत्वात् पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम्। एतदेव च ज्ञापकमत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते इति, ज्ञापकफलञ्च "यद्वृत्तान्नित्यम्" इत्यस्योदाहरणे 'यदग्नयश्चायुर्नीति' इत्यत्र व्यवहिते "यद्वृत्तान्नित्यम्' इति सूत्रकृतं कार्यम् भवति।

**सगतिरपि तिङ्** (१९२८)—'सगतिरपि तिङ्' इति सूत्रस्वरूपम्। पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम् इत्यर्थः। 'यत्काष्ठां प्रपचति' इत्युदाहरणम्।

**पचति पूति** (१९४३)—अत्र प्रयोगे "कुत्सने च सुप्यगोत्रादौ" इति सूत्रेणानुदात्तत्वे 'पचति पूति' इति भवति।

**गतिर्गतौ** (१९२५)—गतौ गतिरनुदात्तः स्यादित्यर्थः। 'अभ्युद्धरति' इत्युदाहरणम्।

**अभ्युद्धरति** (१९४८, ५१)—अत्र "गतिर्गतौ" इति सूत्रेणानुदात्तत्वे 'अभ्युद्धरति' इति भवति।

**यत् प्रपचति** (१९५२)—अत्र प्रयोगे "तिङि चोदात्तवति" इति सूत्रेण गतेरनुदात्तत्वे 'यत्प्रपचति' इति भवति।

**तिङि चोदात्तवति अत्र तिङ्ग्रहणफलम्** (१९३३)—अत्र सूत्रे तिङ्ग्रहणं किमर्थम्। उदात्तवतः परिमाणार्थम्। अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाविधानात्। तिङ्ग्रहणाभावे धातोरेव क्रियावाचित्वात् गतिसंज्ञानिमित्तत्वमिति धातावेवोदात्तवति निघातः स्यात् प्रत्यये न स्यात् कृते तु तिङ्ग्रहणे यं धातुम्प्रति गतित्वं तद्घटके तिङन्ते उदात्तवति परे इत्येवार्थो भवति। तेन यत्प्रकरोतीत्यादि लक्ष्ये धातोः शेषनिघातेन सत्यप्यनुदात्तत्वे तिङन्तस्य उप्रत्ययस्वरेण मध्योदात्तत्वाद् गतेरेवनिघातो भवतीति शम्।

इति तिङन्तस्वराः



# अथ स्वरसञ्चारप्रकारः

अग्निमीळे पुरोहितम् ( १९२६ )—तत्र च अग्निशब्दो माधवमते "फिषोन्त उदात्तः" इति सूत्रेणाव्युत्पन्नपक्षेऽन्तोदात्तः। वस्तुतस्तु "घृतादीनाञ्च" इति सूत्रेण घृतादित्वादन्तोदात्तः। व्युत्पत्तिपक्षे तु निप्रत्ययस्वरेणान्तोदात्तः। अम् सुप्त्वात् "अनुदात्तौ सुप्पितौ" इति सूत्रेणानुदात्तः। "अमिपूर्वः" इत्येकादेशस्तु "एकादेश उदात्तेनोदात्तः" इति सूत्रेणोदात्तः अग्निशब्दात् परस्य तिङन्तस्य ईळे शब्दस्य "तिङ्ङतिङः" इत्यनेन निघातः। "ईड्" स्तुतौ धातोः लडुत्तमैकवचनस्येटि, टेरेत्वम् द्वयोश्चास्य स्वरयोः इत्यादिना प्रातिशाख्येन डस्य लत्वम् सत्यपि धातुत्वादाद्युदात्तत्वे संहिताविवक्षायां निघाते "उदात्तादनुदात्तस्य स्वरितः" इत्यनेनेकारः स्वरितः "स्वरितात्संहितायाम्" इति 'ळे' इत्यस्य प्रचयाऽपरपर्याया एकश्रुतिः।

पुरः शब्दोऽन्तोदात्तः "पूर्वाधरावराणामसिपुरधवश्चैषाम्" इत्यसिप्रत्ययस्वरात्। हितशब्दोऽपि धाधातोः निष्ठायां "दधातेर्हिः" इति सूत्रेण ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः "पुरोऽव्ययम्" इति गतिसंज्ञायां "कुगति प्रादयः" इति सूत्रेण समासे समासाऽन्तोदात्ते "तत्पुरुषे तुल्यार्थ" इत्यव्ययपूर्वपदप्रकृतिस्वरे, "गतिकारकोपपदात् कृत्" इति कृदुत्तरपदप्रकृतिस्वरे थाथादिस्वरे च पूवपूर्वोपमर्देन प्राप्ते "गतिरनन्तरः" इति पूर्वपदप्रकृतिस्वरः। पुरःशब्दस्योकारस्य संहितायां प्रचये प्राप्ते "उदात्तस्वरितपरस्य सन्नतरः" इत्यनुदात्ततरः। इति शम्।

ऋत्विक् ( १९२८ )—अत्र "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च" इति सूत्रेण क्विनि सर्वापहारे "सम्प्रसारणाच्च" इति सूत्रेण पूर्वरूपे ऋत्विच्छब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्ते 'ऋत्विक्' इति भवति।

इति स्वरसञ्चारप्रकारप्रकरणं समाप्तम्।



# अथ पाणिनीयशिक्षाप्रश्नोत्तरी

**शिक्षालक्षणम् ( १९५१ )**—शिक्ष्यतेऽनया वर्णोच्चारणमिति शिक्षा। अथ च—शिक्षानाम—उदात्तानुदात्तस्वरितप्रचयाख्यस्वर-ह्रस्वदीर्घप्लुत—अनुनासिकाननुनासिकादिभेदभिन्नवर्णसमुदायात्मकपदोच्चारणप्रकारबोधको ग्रन्थविशेषः।

**त्रिषष्टिरित्यारभ्य ( का० ३-५ यावत् ) अनुस्वारो विसर्गश्चेति यावत्**
**( १९३५, ३७, ३८, ३६, ४२, ४३, ४९, ५१, ५२ )—**

त्रिषष्टिः चतुःषष्टिर्वा वर्णाः सम्भवतो मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ ३ ॥

प्रकृतेः स्वभावत एवागतं, प्रकृतेरिदं वा प्राकृतं तस्मिन् प्राकृते अपभ्रंशादिरूपायां 'प्राकृत' भाषायाम्। प्राकृतभाषैव प्रकृतिः आपामरं स्वभावतस्तस्या उच्चार्यमाणत्वात् ततः संस्कृत्य प्रकाशिता च संस्कृतभाषेति मते इदम्। संकृतभाषैव प्रकृतिरिति मते च प्रकृतेः ( संस्कृतभाषातः ) आगतं प्रकृतौ भवं वा प्राकृतम् ( अपभ्रंशादि भाषान्तरम् ) तस्मिन् प्राकृते, संस्कृतं सर्वभाषाणां प्रकृतिभूतं तस्मिंश्चापि ( संस्कृतभाषायामपीत्यर्थः ) स्वयम्भुवा विधात्रा स्वयं प्रोक्ताः अत्यादरेणोक्ताः। त्र्यधिका षष्टिस्त्रिषष्टिरेवं चतुरधिका षष्टिश्चतुःषष्टिर्वा वर्णाः अक्षराणि सम्भवतो लोकवेदयोरेतेषामेव सम्भवात् प्रसिद्धत्वात् मता इष्टाः इतोऽधिका वर्णा नेष्टा इत्यर्थः। "शम्भुमते मताः" इत्यपि पाठः क्वचिद् दृश्यते तत्र शम्भुमते ( शिवानुसारिण्यस्मिन् पाणिनीये मते इत्यर्थः ) मताः अभिमताः। संस्कृतभाषातः प्राकृतापभ्रंशादिभाषोद्भवश्चाभिधातृवैगुण्यादेवेति मन्तव्यम्। अत एवोक्तं हरिणा वाक्यपदीये ब्रह्मकाण्डे—

"पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु" इति।

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः के इत्याकाङ्क्षायामाह—

स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ ४ ॥

**स्वरा विंशतिरेकश्चेति**—स्वरा इति 'स्वृ' शब्दोपतापयोः स्वर्यते शब्द्यतेऽनेन व्यञ्जनमिति करणेऽच् प्रत्ययः। कथं ते एकविंशतिः ततश्चतुरो यथास्मृति विवृणोमि—अ इ उ ऋ एते चत्वारो ह्रस्वदीर्घप्लुतभेदेन द्वादश। लृकारस्य दीर्घादयो न सन्तीति स्मरणात् ह्रस्व एवोपदिश्यते अत एते त्रयोदश। ए ऐ ओ औ सन्ध्यक्षराणि सन्ध्यक्षराणामपि ह्रस्वाः न सन्तीति स्मरणात् दीर्घप्लुता एव गृह्यन्ते,

ते एतेऽष्टौ पूर्वैस्त्रयोदशभिः सहैकविंशतिः । कादयो मावसानाः स्पर्शाः ( क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म ) पञ्चविंशतिः इति जिह्वामूलतालुमूर्द्धदन्तोष्ठादिभिः परस्परं स्पर्शैरभिनिष्पत्य आविर्भवन्तीति स्पर्शाः । पूर्वयैकविंशत्या सह षट्चत्वारिंशत् । यादयश्च स्मृता ह्यष्टाविति—यकारादयश्च अष्टौ ( य र ल व श ष स ह ) इति । अत्र आद्याश्चत्वारोऽन्तःस्थसञ्ज्ञाः उपरितनाश्चत्वार ऊष्माणः । पूर्वया षट्चत्वारिंशता सह चतुःपञ्चाशत् । 'चत्वारश्च यमाः स्मृता' इति यच्छन्तीति यमाः स्वयमेवोपरमेरन् । के ते यमाः ? लोके कुं खुं गुं घुं इति यमाः "अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वगुणः" इत्यौदव्रजिः ।

तथा च—ह्रस्वादिभेदैश्चत्वारः प्रथमा द्वादश स्मृताः ॥
लृकारो ह्रस्व एवैचोऽष्टौ स्वरा एकविंशतिः ॥ १ ॥
पञ्चविंशतिरष्टाब्धिः स्पर्शाः स्युर्यादयो यमाः ॥
अनुस्वारो विसर्गश्च ᳵकᳵपौ प्लुतलृकारकः ॥ २ ॥
त्रिषष्टिरेवंवर्णाः स्युर्ह्रस्वदीर्घादिभेदतः ॥
अनुस्वारद्वयाद्वर्णाश्चतुः षष्टिरितीरिताः ॥

तथा च नारदः—अनन्त्यश्च भवेत्पूर्वो ह्यन्तश्च परतो यदि ।
तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्ववर्णयोः ॥ १ ॥
वर्गान्त्यान् शषसैः सार्द्धमन्तस्थैर्वाऽपि संयुतान् ।
दृष्ट्वा यमा निवर्तन्ते आदेशिकमिवाध्वगाः ॥ २ ॥

इति नारदौदव्रज्योर्मतेन यमो वर्णागम इति विधीयते । अस्मात् शास्त्रात् 'चत्वारश्च यमाः स्मृताः' इति वर्णान्तरत्वेनोपदेशः संयोगशास्त्रात् । अथ चतुरक्षराणामुदाहरणमिति प्रकृत्य अग्ग्निरिति यमो गकारौ द्वौ नकार इकारश्चेति । अन्ये तु यमं वर्णाप्तिं मन्यन्ते । तथा च शौनकः "स्पर्शा यमाननुनासिकान् स्वान् परेषु स्पर्शेष्वनुनासिकेषु" इति । पूर्वया चतुःपञ्चाशता सहाष्टपञ्चाशत् ॥ ४ ॥

अनुस्वारो विसर्गश्च ᳵ क ᳵ पौ चापि पराश्रितौ ( पराश्रयौ )
दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च ॥ ५ ॥

स्वरमनुभवतीत्यनुस्वारः, अनु अकारानुगमेनानुस्वारः वक्ष्यति च दन्तमूल्यः स्वरानुग इति । विसर्ग इति-विविधं सृज्यते क्षिप्यते इति विसर्गः । ᳵ क ᳵ पौ चापि पराश्रयाविति । पराश्रयाविति-परौ ककारपकारौ आश्रयः स्थानं ययोस्तौ पराश्रयौ । तथा च वक्ष्यति—"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इति ।

अपरः पाठः—ᳵ क ᳵ पावपि परौ स्मृतौ । अनुस्वारविसर्गयोः परावित्यर्थः। अपरोऽपि पाठः ᳵ क ᳵ पौ चापि कपाश्रयौ । ककारपकारौ आश्रयः स्थानं ययोस्तौ कपाश्रयौ । चशब्दादनुस्वारविसर्जनीयावपि पराश्रयौ । दुःस्पृष्टश्चेतीति । ईषत्स्पृष्टो वर्णधर्मो न वर्णान्तरम् । वक्ष्यति च—'अचोऽस्पृष्टा यणस्त्वीषत्' इति । तथा चौदव्रजिः—'तत्र स्पृष्टं प्रयतनं करणं स्पर्शानाम्' 'दुःस्पृष्टमन्तःस्थानाम्' इति । यण्भक्तिश्च ऌकारो विद्यते । अतो ऌकारो दुःस्पृष्टधर्मा चशब्दात् ऋकारः । इति शब्दः पादपूरणार्थः । ऌकार इति ऌवर्णात् कारप्रत्ययः । प्लुत एव चेति । ऌकारस्य दीर्घादयो न सन्तीति पूर्वं परमतमुपन्यस्तं स्वमतं चाह—ऌकारः प्लुत एव चेति । त्रिमात्रः चशब्दाद्ध्रस्वश्च । ननुवर्णानां प्रयत्नमुपरिष्टाद्वक्ष्यत्येव किमर्थमप्रस्तुतः प्रयत्नः कथ्यते ? उच्यते, प्लुतविधानार्थं तावदॢकारः उच्चारयितव्यः उच्चारिते च ऌकारे लाघवार्थमप्रस्तुतोऽपि प्रयत्नः उच्चारितः दुःस्पृष्टश्चेति । अनुस्वारादयः प्लुतान्ताः पञ्च । पूर्वैरष्टपञ्चाशद्भिः सह त्रिषष्टिः । चतुःषष्टिःकथम् ? अनुस्वारो विसर्गश्चेति पाठान्तरात् । कथंपुनरनुस्वारद्वयं ह्रस्वदीर्घभेदेनेति ब्रूमः ? तथा चौदव्रजिः—"अनुस्वारावं आं इत्यनुस्वारौ ह्रस्वदीर्घौ दीर्घह्रस्वौ वर्णौ" इति । अत एव चतुः षष्टिरिति (१) शम् ।

( १९४१, ४५, ५२ । का० ६, ७, ८, ९ यावत् )—अथ वर्णसंख्यापरिज्ञानोत्तरकालं चिन्त्यते, क एषामुच्चारयिता कथं चोच्चारयति केनक्रमेण चेत्याह—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥

आत्मा शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तः । कथं पुनरेतदवगम्यतेशरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आत्मेति ? द्रष्टृत्वात् । द्रष्टा हि दृश्यातिव्यतिरिक्तो भवति प्रयोजकत्वात् बुद्ध्यादीनि कर्तृप्रयोज्यानि करणत्वात् कुठारवत् इति न्यायात् श्रुतेश्च । न्यायस्तावत्-'अग्निहोत्रं जुहुयात स्वर्गकामः' इति स्वर्गादिफलसाधनानि

---

( १ ) स्वराः—२१ अ, आ, आ ३ इ ई ई ३, उ ऊ ऊ ३, ऋ ॠ ॠ ३, ऌ, ए ए ३ ओ ओ ३ ऐ ऐ ३, औ औ ३ एते एकविंशतिः स्वराः। क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म एते २५ पञ्चविंशतिः स्पर्शाः । ८ अष्टौ—यादयः तत्र-य र ल व ( अन्तस्थाः ) श ष स ह ( ऊष्माणः ) ४–कुं खुं गुं घुं यमाः ४ । 'अं' १ अनुस्वारः । 'अः' १ विसर्गः । १ जिह्वामूलीयःᳵकᳵख १–उपध्मानीयःᳵपᳵफ । १–दुःस्पृष्ट–ऌ इति ६३ त्रिषष्टिसंख्याकाः वर्णा । मतान्तरे—१ प्लुत ऌ३ अधिकः तेन ६४ चतुःषष्टिसङ्ख्याकाः इति ।

कर्माणि श्रूयन्ते । स्वर्गश्च वायुशरीरोपभोग्यः तद्व्यतिरिक्तः आत्मा शरीरादेरित्यनुमीयते । श्रुतिश्च–'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' इति । शरीरापक्रमणाय शरीरादिव्यतिरिक्त आत्मा । छान्दोग्यश्रुतिश्च "एवमेवैषसम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति । क एषामुच्चारयितेति पृष्टे तस्योत्तरं दत्तमात्मेति । कथमुच्चारयति केन क्रमेणेति प्रश्नद्वयस्योत्तरं दीयते-स आत्मा बुद्ध्या सहार्थान् बाह्यान् समेत्य सम्यगवगम्यार्थप्रत्यायनाय यदिशब्दा उच्चार्यन्ते तदामनो युङ्क्ते विवक्षया वक्तुमिच्छा विवक्षा तया तच्च मनो नियुङ्क्ते आत्मा । मनः कायाग्निमाहन्तीति—तच्च मनो नियुक्तं सत् कायाग्निमाहन्ति कायाग्निं शरीराग्निम् । आभिमुख्येनाहन्ति स प्रेरयति मारुतमिति—सोऽग्निरभिहतः सन्मारुतं वायुं प्रेरयति ।

मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
प्रातः सवनयोगं तं छन्दो गायत्रमाश्रितम् ॥ ७ ॥

मारुतो वायुरुरसि चरन्मन्द्रं स्वरं जनयत्युत्पादयति । मन्द्रमिति मन्देरक्प्रत्ययः । प्रातः सवनयोगमिति—प्रातः सवनेन सह योगोऽस्येति प्रातःसवनयोगस्तम्. तथा च ऐतरेयब्राह्मणे—"अथ मन्द्रं तपति तस्मात् मन्द्रया वाचा प्रातः सवने शंसेत्" इति । गायत्रं छन्दोऽस्याश्रयः । गायत्रं गायतेः स्तुतिकर्मणः । आच्छादयति-छन्दः ।

कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥

मारुत इति वर्तते ( सम्बध्यते इत्यर्थः ) सवनं छन्दः स्वरं चरन्निति च । वर्णान् जनयतीति यावत् । कण्ठे चरन्वायुर्मध्यमं स्वरं जनयति । कण्ठे इति 'कण्ठेष्टः' इति ठप्रत्ययः । मध्यं दिनं युनक्तीति माध्यन्दिनं सवनभाजं त्रिष्टुप्छन्दोऽनुगामिनम् । तारमिति—तार्तीयसवनमिति तृतीयसवनभाजं तारं स्वरं शीर्षण्यमिति–मूर्द्धनि चरन् वायुं जनयत्युत्पादयति । जागतच्छन्दोऽनुगामिनम् । जागतं छन्दोऽनुगच्छतीति जागतानुगः । शीर्षण्यमिति "शीर्षश्छन्दसि" इति शिरःशब्दस्य शीर्षभावः तत्र भवं शीर्षण्यम् । इति ।

सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥

सः वायुरुदीर्ण ऊर्ध्वगतो मूर्द्धानं यावदुपरितनीं गतिमलभमानः शिरः कपालेनावष्टब्धत्वात् पुनः प्रत्यावृत्य वक्त्रमेत्रापद्य वर्णाञ्जनयते उत्पादयति । पुनर्मारुतग्रहणं विस्पष्टार्थम् । तेषां विभागः पञ्चधा स्मृतः इति । तेषां वर्णानां जन्यमानानां विभागो विवेकः पञ्चधा पञ्चप्रकारः । 'सङ्ख्याया विधार्थे धा' इति धा । स्मृतोऽनुमतः । इति ॥ ९ ॥

अष्टौ स्थानानि वर्णानामुरः, कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥ १३ ॥

अतिस्फुटार्थोऽयं श्लोकः—तथापि वर्णानाम् अकारादीनाम् अष्टौ स्थानानि भवन्ति कानि च तानि तत्राह—उरः १ कण्ठः, २ शिरः, ३ जिह्वामूलम्, ४ दन्ताः, ५, नासिका, ६ ओष्ठः, ७ तालु ८ । कस्य वर्णस्य किं स्थानमिति त्वग्रे वक्ष्यति । अत्र 'नासिकोष्ठाविति' अपपाठः, असमासे पररूपस्याप्राप्तेः । समासे चैकवद्भावापत्तेरिति ।

ऊष्मणोऽष्टधा गतिमाह (१९३७, ४०, ४८)—

ओभावश्च विवृतिश्च शषसा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥

ऊष्मणः विसर्गस्य । विसर्गस्य ऊष्मसंज्ञा च याज्ञवल्क्यशिक्षायां दृश्यते । तथा हि—यथा बालस्य सर्पस्य निःश्वासो लघुचेतसः । एवमूष्मा प्रयोक्तव्यो हकारं परिवर्जयेत् ॥ इति । एवञ्च विसर्गस्य-ओभावः विवृतिश्च सन्ध्यभावश्च । शषसा शकार-षकार-सकारादेशाः वा रेफः रेफादेश एव वा जिह्वामूलम् जिह्वामूलीयादेशः उपध्मा-उपध्मानीयादेशः इत्येवमष्टधा गतिर्भवति । उदाहरणानि यथा-क्रमशः-विसर्गस्य ओभावो यथा-शिवोवन्द्यः । साक्षात् परम्परया वा रेफस्योत्वे गुणे च ओभावो भवति तेन 'शिवोवन्द्यः' इत्यत्र विसर्ग एव ओभावं गतः । विवृतेरुदाहरणम्-क ईशः । विवृतिलक्षणमुदाहरणञ्च याज्ञवल्क्यशिक्षायामुक्तम्—

द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते ।
विवृतिस्तत्र विज्ञेया युईशेति निदर्शनम् ॥ इति (श्लो० ९४)

शकारादेशस्य 'हरिश्शेते' 'कश्शेते' षकारादेशस्य-आविष्कृतम् । 'रामष्षष्ठः' । सकारादेशस्य 'कस्कः' 'कौतस्कुतः' विसर्गस्य रेफरूपगतेः 'अहर्पतिः' 'गीर्पतिः' 'धूर्पतिः' जिह्वामूलीयोदाहरणं क≍करोति क≍खनति । उपध्मानीयरूपगतेः क≍पचति, क≍फलति । एतेषु अष्टसु यद्येतेषां श्रवणं न स्यात् तर्हि सति सम्भवे विसर्गः श्रूयते ।

एतावतैवोष्मणां गत्यष्टकथनम् । ऊष्मणां गत्यष्टकथनं यस्य यत्सम्भवति तदभिप्रायेण न तु प्रत्येकं तेषां गत्यष्टकत्वम् ।

( १९३४, ४०, ४१ )—

यद्योभावप्रसन्धानमुकारादिपरं पदम् ।
स्वरान्तंतादृशंविद्याद्यदन्यद् व्यक्तमुष्मणः ॥ १५ ॥

अत्र-यत्र तत्रेति पदद्वयाध्याहारः । यत्र यस्मिन् पदे उकार आदिर्यस्य तत्तादृशं पदं परम् यत्र तत् उकारादिपरम् तत्र यद्योभावप्रसन्धानम् संहितयौत्वपरिज्ञानं ( ओत्वरूपसन्धिः ) दृश्यते तर्हि तत्र तादृशपदम् ओभावान्तं ओकारं स्वरान्तं स्वरस्थानिकं विद्यात् जानीयात् । उदाहरणं यथा—इषेत्वोर्ज्जेत्वा इत्यादि त्वोतः, मेतेत्यु० अन्यद्यदोकारप्रसन्धानं तदुष्मणो विसर्गस्य स्थाने व्यक्तं परिस्फुटं साक्षात् परम्परया वा निष्पन्नं विद्यात् जानीयात् । यथा—'शिवोवन्वः' 'महिमातो ज्यायांश्च पुरुषः' इति च अत्र च 'महिमातो' इत्योकार प्रसन्धानं यत्तद्विसर्गप्रभवम् । अत्रोष्मणोऽष्टविधगतौ हि-'विसर्गस्थाने ओकाराद्यादेशः स्यात्' इत्यर्थस्तु न, किन्तु विसर्ग एवाऽयमोकारादिरूपां दशामापन्न इत्येवार्थः । अन्यथा तु विसर्गस्य ओकाराद्यादेशविधायकवचनाभावात् इदमष्टविधविसर्गगतिवर्णनं निखिलमसङ्गतमेव स्यात् ।

**अष्टौ स्थानानि वर्णानामित्युक्तं तत्र कस्य किंस्थानमित्याह त्रिभिः श्लोकैः—**
**( १९४४, ४९, ५२ । )—**

हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
उरस्यम् ( औरस्यं ) तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥

पञ्चमैः वर्गपञ्चमैर्ङकारञकारञकारादिभिर्युतम् अन्तःस्थाभिः-यरलवैश्च संयुक्तं तं हकारं उरस्यम् उरसि भवम् उरःस्थानोद्भवम् । औरस्यमिति पाठे तत एव स्वार्थिकाऽणूप्रत्यये औरस्यम् इति । विजानीयात् । एतादृशहकारस्योरःस्थानम् इति यावत् । असंयुतं हकारं च कण्ठ्यमाहुः । कण्ठस्थानप्रभवम् कथयन्ति । तत्रोदाहरणं यथा—'ह्मलयति' 'ह्वलयति' । इति ।

**स्थानान्याह ( १९५२ )—**

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ॥
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥ १७ ॥

अहौ अकारहकारौ कण्ठ्यौ कण्ठस्थानजातौ, इचुयशास्तालव्याः-इकार-चवर्ग-यकार-शकाराः तालुस्थानजाताः बोध्याः, उपू-उकारपवर्गौ ओष्ठौ ओष्ठस्थानजातौ । ऋ-टु-र-षा-मूर्धन्याः स्युः ऋकारटवर्गरेफषकाराः मूर्धस्थानवन्तः । लृ-तु-ल-

सा दन्त्याः दन्तस्थानजाताः बोध्याः। अत्र दन्तपदं दन्तसंयुक्तदेशपरं तेन भग्नदन्तस्याप्युच्चारणं भवत्येवेति।

जिह्वामूले तु कुः प्रोक्तो दन्तोष्ठ्यो वः स्मृतो बुधैः।
ए ऐ तु कण्ठतालव्या ओ औ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥

**व्याख्या**—कुः जिह्वामूले प्रोक्तः कवर्गस्य जिह्वामूलं स्थानम् वः वकारः बुधैः दन्त्योष्ठ्यः स्मृतः दन्तोष्ठस्थानवानित्यर्थः। ए ऐ एकारैकारौ कण्ठतालव्यौ ज्ञेयौ कण्ठतालुस्थानवन्तौ बोध्यौ। ओ औ ओकारौकारौ कण्ठोष्ठजौ स्मृताविति कथिताविति। नन्वत्र कवर्गस्य जिह्वामूलस्थानकथनेन कण्ठस्थानकथनम्, 'अकुहविसर्जनीयानां कण्ठः' इत्यादिना कौमुदीकृतामसङ्गतमितिचेन्न, कौमुदीग्रन्थे कण्ठपदस्य कण्ठतत्समीपजिह्वामूलस्थानोभयपरत्वात्। न च कवर्गस्यापि जिह्वामूलीयत्वे व्यवहारातिप्रसङ्ग इति वाच्यम्, जिह्वामूलीयपदस्य वर्णविशेषे रूढिस्वीकारादिति।

( १६३४, ३६, ३८, ४२, ४३, ४६, ४८, ५० )—क.

अर्धमात्रा तु कण्ठ्यस्या एकारैकारयोर्भवेत्।
ओकारौकारयोर्मात्रातयोर्विवृतसंवृतम् ॥ १९ ॥

अर्धमात्रेति—एकारैकारयोः ओकारौकारयोः कण्ठ्यस्यार्धमात्रा मात्रा वा भवेत्। 'तु चात्र वार्थे' तयोरेङैचो कण्ठ्यस्य विवृतसंवृतं संवृतविवृतप्रयत्नजन्यत्वं बोध्यम्। अथ तच्छब्दो बुद्धिस्थपरामर्शकस्तेन एङैचोः परामर्शः। विवृतसंवृतमिति भावप्रधाननिर्देशः। संवृतश्च विवृतश्चेति विग्रहे द्वन्द्वसमासे लघ्वक्षरत्वाद्विवृतस्य पूर्वप्रयोग इत्यवधेयम्। मात्रिकं संवृतं ज्ञेयं द्विमात्रिकं तु विवृतमिति कारिकार्थः। एवञ्चायादिषु मात्रिकः संवृतः द्विमात्रिको विवृतः। एकारैकारयोः कण्ठ्यः संवृतः। ऐकारौकारयोस्तु कण्ठ्यो विवृतस्तेन संवृतावर्णघटिततालुस्थानजन्यघटितस्य तादृशौष्ठस्थानघटितस्य च स्थाने संवृतावर्णघटिततालुस्थानजन्यघटितायादेशः। अन्यस्य च संवृतावर्णघटितस्य विवृतावर्णघटित इति नाव्यवस्था। तस्मात् 'ए ऐ तु कण्ठतालव्यौ' इति युक्तियुक्तमित्यर्थो भवति। अन्यस्तु अन्यतो बोध्य इति।

संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम्।
घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ २० ॥
स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ २१ ॥

घोषावेति—वेति पादपूरणे "वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे" इति

मेदिनीकोषात् । तथा च सर्वेघोषाः संवृताः संवारप्रयत्ना बोध्याः अघोषा विवृता विवृतप्रयत्नाः स्मृताः कथिता इत्यर्थः । स्वराणामूष्मणां शषसहानां विवृतं करणं स्मृतम्, एषां विवृतप्रयत्नो बोध्यः । एदौ एकारौकारौ स्वरोष्मभ्योऽपि विवृतौ विवृततरौ ऐचौ ऐकारौकारौ ताभ्यामेकारौकाराभ्याञ्च तथैव विवृतौ विवृततमौ इति कारिकार्थः । एवञ्चैकारस्य ऐकारस्य च परस्परं सवर्णसंज्ञापि न प्रयत्नभेदादिति । नैकारेण ऐकारग्रहणप्रयुक्तो दोषश्च । नन्वेकारादिषु पूर्वं संवृतत्वादेरपि कथनात् कथं तेषां विवृततरत्वादिकथनमिति चेन्न, इतरांशे एव विवृतत्वाद्यभिधानात् । तदुपरागाच्च न संवृतत्वस्य पृथग्ग्रहणमिति स्पष्टं शेखरे ॥

अनुस्वारयमानाञ्च नासिकास्थानमुच्यते ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ २२ ॥

अनुस्वारयमानाञ्चेति—अनुस्वारस्य यमानाञ्च, स्थानं नासिकोच्यते । अयोगवाहा भाष्यपरिगणिता अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमा आश्रयस्थानभागिनः । यत्स्वराश्रिता तस्य तत्स्थानं तत्स्थानका विज्ञेयाः । यथा 'रामः' इत्यत्र विसर्गस्य कण्ठस्थानम् । 'हरिः' इत्यत्र विसर्गस्य तालुस्थानम् इति । अत्र च शब्देन ञमङणनानामपि सङ्ग्रहस्तेन तेषामपि नासिकास्थानमित्यपि बोध्यम् । वाहयन्ति कार्यं निर्वाहयन्ति इति वाहाः न योगो वर्णसमाम्नायेषु पाठो येषां ते अयोगास्ते च ते वाहा अयोगवाहाः । अत्रानुस्वारयमानां पृथक् नासिकास्थानकथनेन नाश्रयस्थानभागिनः किन्तु तदन्यविसर्गादिरेवेति न भ्रमितव्यम्, आश्रयस्थानापरित्यागेन नासिकास्थानकथनात् । अतएव ञादीनां नासिकास्थानत्वेऽपि तालवादिस्थानत्वमपि सर्वसम्मतम् । अनुस्वारोपि आश्रयस्थानभागीति मत्वैव शब्दरत्नकृता 'हरिं जयति' इत्यत्रापादितो जश् जकारः स्यादित्युक्तं भावप्रकाशकृता ।

( १९४७ ) अलाबुवीणानिर्घोषो दन्तमूल्यः स्वरानुगः ।
अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥ २३ ॥

अलाबुनः तुम्बीफलस्य या वीणा ( वाद्यविशेषः ) तस्याः निर्घोष इव निर्घोषो यस्य स अलाबुवीणानिर्घोषः दन्तमूल्यः दन्तमूले भवः स्वरानुगः स्वरानुगच्छतीति स्वरानुगोऽचः पर इति यावत् । ईदृशोऽनुस्वारः ह्रोः हकाररेफयोः परयोः शषसेषु च परेषु नित्यं कर्तव्यः उच्चारयितव्य इत्यर्थः । उदाहरणं यथा—बृंहणम् । कुण्डं रथेन । कंसः । इन्द्रियाणां षष्ठं मनः । हंस इति ।

( १९३४, ४० )—

अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये ।

द्विरोष्ठ्यौ तु विगृह्णीयात् यत्रौकारवकारयोः ॥ २४ ॥

अनुस्वारे परे 'हरिं वन्दे' इत्यादौ विवृत्यां स्वरसन्ध्यभावे 'य ईशे' इत्यादौ विरामे च वर्णानामुच्चारणाभावे च 'वाक्' इत्यादौ अक्षरद्वये संयुक्तवर्णद्वये च उच्चारयितव्ये यत्र यत्पदघटकयोरोकारवकारयोः उच्चारयितव्ययोः द्विःद्विवारं ओष्ठ्यौ ओष्ठौद्विर्विगृह्णीयात् पृथक् कुर्यात्। ओष्ठ्यावित्यत्र स्वार्थिकः ष्यञ्। विवृतिः— विवेकेन पृथग्भावेन वर्तते इति विवृतिः। सा च चतुर्विधा तथा च नारदः—

विवृतयश्चतस्रो वा विज्ञेया इति मे मतम्।
अक्षराणि नियोगेन तासां नामानि मे शृणु॥
ह्रस्वादिर्वत्सानुसृता वत्सानुसारणी चाग्रे।
पाकवत्युभयोर्ह्रस्वा दीर्घवत्ता पिपीलिका॥

**रङ्गलक्षणोच्चारणप्रकारस्य व्याख्या** ( १६३४, ३८, ४०, ४६ )( २६— का० आरभ्य ३० का० यावत् )—

यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते।
एवं रङ्गाः प्रयोक्तव्याः खेअराँ इव खेदया ॥ २६ ॥

यथा सौराष्ट्रिका सुराष्ट्रदेशजाता नारी कामिनी तक्रँ इति अभिभाषते कथयति निरनुनासिकतक्रशब्दमपि तक्रँ इति सानुनासिकं वक्ति। एवं रङ्गाः प्रयोक्तव्याः उच्चारयितव्याः। तत्रोदाहरणमाह—'खे अराँ' इति इदं वेदवाक्यम् नकारस्य रुत्वे जाते योऽनुनासिको विधीयते स रङ्गः। रञ्जयति पूर्ववर्णमिति रङ्गो वर्णविशेषः। बाहुलकात् कर्तरि घञ्। करणे घञ् तु न युक्तः घञिचेत्यादिना नलोपापत्तेः। यथाह नारदः—

नकारः स्वरसंयुक्तश्चतुर्युक्तो विधीयते।
रेफो रङ्गश्च लोपश्च अनुस्वारोऽपि वा क्वचित्॥ इति॥ लोमशशिक्षायान्तु ( श्लो० ६ ) रङ्गस्य द्वैविध्यमप्युक्तम् "रङ्गस्तु द्विविधो ज्ञेयः स्वरपरो व्यञ्जनपर इति।

रङ्गवर्णं प्रयुञ्जीरन् नोग्रसेत् पूर्वमक्षरम्।
दीर्घस्वरं प्रयुञ्जीयात् पश्चान्नासिक्यमाचरेत् ॥ २७ ॥

( सू० रङ्गलक्षणस्य तदुच्चारणप्रकारस्य च प्रश्नोत्तरे श्लोकाः एव पर्याप्ताः किन्तु व्याख्याप्रश्ने व्याख्याप्यावश्यकी तेनाग्रे श्लोकचतुष्टयस्य व्याख्या सङ्क्षिप्तरूपेण कृता )

**रङ्गेति**—पूर्वमक्षरम् पूर्वो वर्णः रङ्गवर्णं यथा नोग्रसेत् पूर्ववर्णरङ्गवर्णयोः सम्मेलनं यथा न भवेत् तथा प्रयुञ्जीरन्। उच्चारयेयुः। तथा रङ्गं दीर्घस्वरं प्रयुञ्जीयात्।

पश्चात् रङ्गस्यान्ते नासिक्यमाचरेत् उच्चारयेत् । एतच्च याज्ञवल्क्यशिक्षायामपि उक्तम् । यथा च—

रङ्गेचैव समुत्पन्ने न ग्राह्यं पूर्वमक्षरम् ।
स्वरं दीर्घं प्रयुञ्जीयात् पश्चान्नासिक्यमाचरेत् ॥
हृदये चैकमात्रस्त्वर्द्धमात्रस्तु मूर्द्धनि ।
नासिकायां तथार्द्धश्च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥

हृदये चैकमात्रस्त्विति—यः हृदये एकमात्र उच्चारणीयः मूर्धनि मस्तके तु अर्द्धमात्र उच्चारणीयः । नासिकायां च अर्द्धमात्र उच्चारणीयः । एवं रङ्गस्य द्विमात्रता भवति । अतो द्विमात्रो रङ्गः करणीयः ॥ २८ ॥

हृदयादुत्करे तिष्ठन् कांस्येन समनुस्वरन् ।
मार्दवं च द्विमात्रं च जघन्वाँ२ इति निदर्शनम् ॥ २९ ॥

हृदयादिति—हृदयात् हृदयप्रदेशात् उत्करे ऊर्ध्वदेशे तिष्ठन् उच्चारितो रङ्गः कांस्येन कांसपात्रस्वरेण समनुस्वरन् मार्दवं मृदुत्वं द्विमात्रम् द्विमात्रत्वञ्च प्राप्नुवन् उच्चार्य इति शेषः । जघन्वाँ२ इति निदर्शनम् दृष्टान्त इति बोध्यम् । अत्र कांस्येन समनुस्वरन् इत्यत्र 'समश्चासावनुस्वरन् समनुस्वरन्निति समासः सापेक्षत्वेऽपि आर्षत्वाद्बोध्यः । शकन्ध्वादित्वाच्च पररूपं ज्ञेयम् । द्विमात्रमिति च भावप्रधाननिर्देशः तेन द्विमात्रमित्यस्य द्विमात्रत्वमित्यर्थो बोध्य इति ॥ २९ ॥

मध्ये तु कम्पयेत् कम्पमुभौ पार्श्वौ समौ भवेत् ।
स रङ्गं कम्पयेत् कम्पं रथीवेति निदर्शनम् ॥ ३० ॥

मध्येत्विति—अत्रोच्चारयित्रेति कर्तृपदमध्याहार्यम् । मध्ये स्वरोच्चारणमध्यसमये कम्पं स्वरं कम्पयेत् कम्पयुक्तमुच्चारयेत् । उभौ पार्श्वौ स्वरारम्भावसानांशौ समौ भवेत् भावयेत् अन्तर्भावितण्यर्थश्चात्र भवति । कम्पं स्वरं सरङ्गम् रङ्गेन सहितं तु कम्पयेत् । अत्र तु शब्द एवार्थे तेन सरङ्गमेव कम्पयेत् । नतु रङ्गरहितमित्यर्थः । अत्र दृष्टान्तमाह-रथीवेति । एतत्सर्वं लोमशशिक्षायामुक्तम्—

केन कम्पातितः कम्पः संयोगो येन कम्पते ।
किंवा कम्प इति प्रोक्तो येनासौ कम्पमुच्यते ॥
पूर्वाङ्गेण हतं पूर्वं पराङ्गेण तु धारितम् ।
व्यञ्जनेन द्विधा भिन्नः स्वरो भीतस्तु कम्पते ॥ इति ।

**पाठकगुणदोषविचारः ( १९४७, ५१ )—**

गीती शीघ्री शिरः कम्पी तथा लिखितपाठकः ।

अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ३२ ॥
माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥

अधमपाठकानाह–गीतीति–एते षट् पाठकाधमाः पाठकेष्वधमाः । अधमाश्च ते पाठकाः इति वा समासः। के च ते तानाह–गीतीत्यदि यः गीती गानं कुर्वन् पठति सः अधमः, एवं यः शीघ्री शीघ्रं पठति। शिरःकम्पी शिरःकम्पयन् पठति यश्च लिखितपाठकः स्वलिखितं स्तोत्रं पठति यश्चानर्थज्ञः अर्थज्ञानशून्यः अल्पकण्ठश्च अनभ्यस्तपाठः एतेऽधमाः । अत्रालिखितपाठक इति च्छेदं बहवः कुर्वन्ति । पाठकगुणानाह–माधुर्यमिति–माधुर्यं सुश्राव्यं अक्षरव्यक्तिः स्पष्टाक्षरोच्चारणम् पदच्छेदः पदानां विभागः सुस्वरः शोभनः स्वरः धैर्यं सुन्दरत्वम् लयसमर्थम् एते षट् गुणाः पाठकाः पाठकस्येमे पाठकाः पाठकसम्बन्धिनो गुणाः इति ।

अस्पृष्टादिस्वरूपप्रदर्शनमनुनासिकलक्षणंप्रयत्ननिर्देशश्च (१९३४, ५०, ५२)—

अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलःस्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ ३८ ॥

अच इति—अचः स्वरा ( अ, इ, उ, ऋ, लृ, ए, ओ, ऐ औ ) एते अस्पृष्टाः स्पर्शाभावरूपविवृतत्ववन्तः यणः यवरलाः एते ईषत् स्पृष्टाः । शलिति प्रत्याहारग्रहणं शषसहा एते नेमस्पृष्टाः अर्द्धस्पृष्टाः इत्यर्थः । तथेति पादपूरणार्थः ।शेषाः स्पृष्टाः हलः प्रोक्ता इति । हल इति प्रत्याहारग्रहणं हकारादारभ्यालकारात् । शेष इत्युपयुक्तादन्यः शेषः । यणः शलश्च ईषत्स्पृष्टाः तद्वर्जिताः हलः स्पृष्टाः स्वस्थानैः कथिताः । निबोधानुप्रदानतः इति अनुप्रदानमिति स्वस्थानादिकं घोषादि अनुप्रकर्षेण दीयते इति अनुप्रदानम् "द्वौ नादानुप्रदानौ" इत्यौदव्रजिः । अनुप्रदानतो बाह्यप्रयत्नात् हेतोः वर्णानां भेदं शृणु ॥ ३८ ॥

ञमोऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः ।
ईषन्नादा यण् जशः श्वासिनस्तु खफादयः ॥ ३९ ॥
ईषच्छ्वासांश्चरो विद्याद् गोर्धामैतत् प्रचक्षते ।

ञमिति प्रत्याहारग्रहणं ञ म ङ ण न म् । अनुनासिका इति स्वस्थानैरधिकाः अनुपाठाः नासिकामनुभवन्तीति अनुनासिकाः ञमङणनमोऽनुनासिकानिमान् जानीयात् । तथा च पाणिनिः 'मुखनासिकावचनोऽनुनासिकः' इति नहः इति हकारो रेफश्च नानुनासिकौ हकारो झषश्च झष इति प्रत्याहार ग्रहणं झ भ घ ढ ध एते ह्रादयो

नादिनः स्मर्यन्ते। नाद एषामस्तीति नादिनः। 'अमोऽनुनासिका न ह्रौ' इति पाठे अम इति प्रत्याहारग्रहणम्—अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ म ङ ण न एते अनुनासिकाः न ह्रौ न तु रेफहकारौ—अमावपि सन्तौ। नादिनः हझषः स्मृताः हकारो झषश्च नादिनः। झषः झ भ घ ढ धः। अस्यार्थे पाठद्वयात् अमां हकाररेफवर्जितानां विकल्पेनानुनासिकत्वम् ञमां तु नित्यम् तथा च शौनकः—'सचादयो या विहिता विवृत्तयः प्लुतोपधान्ताः अनुनासिकोपधाः' इति।

तथा उकारश्चेति करणे युक्तो रक्तः पृक्तो द्राघितः शाकलेनेति। अकाररेफयोः प्रथमे पाठे नादित्वं, द्वितीयपाठे हकाररेफयोर्नासिकत्वप्रतिषेधः। ईषन्नादा यणजशस्त्वितियणः कथिताः जशस्तु जकाराद्याः शकारेण प्रत्याहारः जबगडद एते यण् जशश्च ईषन्मनाक् नादाः। श्वासिनस्तु खफादय इति। ख फ छ ठ थ एते श्वासिनः श्वास एषामस्तीति श्वासिनः। 'श्वासो घोषाणां तृतीयात् प्रथमानामुभावघोषश्चतुर्थानां युग्माः सोष्माणम्, इति चौदव्रजिः। चर इति प्रत्याहारग्रहणं च ट त क प श ष स एतन्नामकान् ईषच्छ्वासान् जानीयात्। अन्यः स्पष्टोर्थः—

वेदाङ्गानि ( २९३९, ४४, ४५ ५१ )—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥
शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥

छन्द इति—वेदस्य पादौ छन्दः पिङ्गलमुनिविरचितछन्दः शास्त्रम्। हस्तौ कल्पः पठ्यते कल्पः कल्पसूत्रं शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानफलकम्। चक्षुः वेदस्य नेत्रस्थानीयम्। ज्योतिषामयनं—ज्योतिष् शास्त्रं निरुक्तं निघंटुः निरुक्तञ्च श्रोत्रमुच्यते वेदस्य कर्णस्थानीयमुच्यते।

शिक्षेति—वेदस्य घ्राणं तु नासिका तु शिक्षा स्मृता मुखं च व्याकरणं स्मृतं पाणिनीयादि व्याकरणशास्त्रं प्रोक्तम्। अत्र तु शब्दश्चार्थे यतः अङ्गविकले अनिष्टं तस्मात् साङ्गमङ्गसहितमेव वेदमधीत्य ब्रह्मलोके महीयते पूज्यते ॥ ४१–४२ ॥

नवपदशय्यामाह ( १९३९, ४० )—

अन्तोदात्तमाद्युदात्तमनुदात्तं नीचस्वरितम्।
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ॥ ४५ ॥

अन्तोदात्त इत्याद्यारभ्य त्र्युदात्तमित्येतत्पर्यन्तं स्वराणां नामनिर्देशः एवञ्च नवसु पदेषु शय्यास्थितिर्निर्दिष्टानां स्वराणामित्यर्थः।

नवानामप्युदाहरणानि स्वयमेवाह—"अग्निः सोमः प्रवो वीर्य्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती, इत्युदाहरणानि कथं सङ्घटनीयानि तत्राह—

अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तम्।
प्रेत्युदात्तं व इत्यनुदात्तं वीर्यं नीचैस्वरितम्॥ ४६ ॥

अग्निरित्यन्तोदात्तं फिट्स्वरेण प्रत्ययस्वरेण वा सोम इत्याद्युदात्तं वृषादित्वात् 'वृषादीनां च' इति भावः। प्रेत्युदात्तपदमत्र "निपाता आद्युदात्ताः" इत्यनेनाद्युदात्तता। व इत्यनुदात्तं पदम् "अनुदात्तं सर्वमपादादौ" इत्यधिकृत्य "बहुवचनस्य वस्नसौ" इति तद्विधानात्। वीर्यं नीचस्वरितम्। यस्य स्वरितस्याधोभागे स्वरितस्य चिह्नं दीयते तन्नीचस्वरितम् "बिल्वभक्ष्यवीर्याणि छन्दसि" इत्यनेनान्तस्वरितत्वात्। हविषां मध्योदात्तं स्वरिति स्वरितम्। बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम्॥ ४७ ॥

'हविषाम्' इति मध्योदात्तं पदम्। तथा हि "फिषोन्त उदात्तः" इति हविश्शब्दस्यान्तोदात्तत्वेन "अनुदात्तौ सुप्पितौ" इत्यनेन आमोऽनुदात्तत्वेन "उदात्तादनुदात्तस्य स्वरितः" इत्यामः स्वरितत्वे हविषाम् इति मध्योदात्तं पदम्। 'स्वः' इति स्वरितं "न्यङ्स्वरौ स्वरितौ" इत्यनेन 'बृहस्पतिः' इति द्व्युदात्तं 'बृ' इत्यस्य 'स्प' इत्यस्य च तत्रोदात्तत्वात्। "उभे वनस्पत्यादिषु युगपत्" इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरेणाद्युदात्तत्वात्। 'इन्द्रा बृहस्पती वयम्' इति त्र्युदात्तं पदम्। एकस्मिन् पदे इकारस्य 'बृ' इत्यस्य 'स्प' इत्यस्य चोदात्तत्वात्। द्व्युदात्तस्य बृहस्पतिशब्दस्येन्द्रशब्देन समासे 'देवता द्वन्द्वे च" इति सूत्रेणोभयोः पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरे च तत्र त्र्युदात्तत्वस्य सिद्धत्वात्।

(१९४४)—

कुतीर्थादागतं दग्धमपवर्णं च भक्षितम्।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात्॥ ५० ॥

कुतीर्थात् आचारहीनात् गुरोः 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति कोषः। आगतं समधिगतं (ब्रह्म) वेदाङ्गादिकं शास्त्रं च दग्धं भस्मीभूतमिव निःसत्वं हतप्रभावं च भवति। अपवर्णमशुद्धास्पष्टाक्षरोच्चारणपूर्वकमधीतं भक्षितं भुक्तमिव 'श्वशृगालादिभक्षितशवादिवत् विकलाङ्गं भवतीति (शेषः) तस्य तादृशस्य पाठे अध्ययने पारायणे वा पापाहेरिव दुष्टसर्पादिव यथा मोक्षः जीविताशा नास्ति

तथैव किल्बिषात् पापात् यद्वा पापाहेरिव किल्बिषात् पापरूपदुष्टसर्पात् तस्य तादृशानाचारयुक्तगुरुपठितवेदशास्त्राध्ययनतत्परस्य तादृशाध्ययनेन पापमेव भवति न कदाचिदपि तस्मात् पापात् भवति मोक्षः ।

( १९३६, ५२ )—

मन्त्रो हीनः स्वरतो, वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥

मन्त्र इति—स्वरतः स्वरेण वर्णतः वर्णेन अक्षरेण वा हीनः रहितः मन्त्रः मिथ्याप्रयुक्तः सन् तम् अभीप्सितम् अर्थं न आह न कथयति । सः मन्त्रो वाग्वज्रं भूत्वा यजमानं हिनस्ति नाशयति। अनिष्टावाप्तिं करोतीति यावत् । अत्र दृष्टान्तमाह—यथा स्वरतः स्वरस्य अपराधात् स्वरकृतदोषात् इन्द्रशत्रुः इन्द्रशत्रुशब्दो यजमानं हिनस्ति हिंसितवानित्यर्थः । ननु स्वरादीनां सम्यगुच्चारणाभाव ऋत्विजां दोष इति कथमन्यदोषेणान्यस्य नाश इति चेन्न, ऋत्विगादिकृतहोमाद्यजमाने धर्मोत्पत्तिरिव तत्कृतापशब्दप्रयोगाद्यजमाने प्रत्यवायोत्पत्तिरिति स्वीकारात् ॥

( आख्यायिका ) पुरा किल विश्वरूपनामके त्वष्टुः पुत्रे इन्द्रेण हते सति रुष्टस्त्वष्टा इन्द्रस्य हन्तारं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान् तत्रेन्द्रशत्रुर्वर्धस्वेति मन्त्र ऊहितः तत्र तत्पुरुषप्रयुक्तान्तोदात्तत्वे कर्तव्ये बहुव्रीहिप्रयुक्त आद्युदात्त ऋत्विजा प्रयुक्तः इत्यर्थान्तराभिधानादिन्द्रेण सोऽपि हत इति । अतः परं विशेषः पाणिनीयशिक्षाटीकायामवलोकनीयः । इति शम् ।

**विश्वेश्वरपुरीमध्ये श्रीविश्वेश्वरशर्म्मणा ।**
**परीक्षार्णवताराय कृता प्रश्नोत्तरी तरिः ॥ १ ॥**

समाप्तश्चायं ग्रन्थः ।



# स्वरवैदिक-प्रश्नपत्राणि

## १९२५

१—माहिचीकरताम्, सर्वम्, जयोश्वः, ईड्यः, शरावती, एते सूत्रोपन्यासपुरस्सरं, साधनीयाः।

२—आगच्छ देव ग्रामम् प्रविश, अत्र सूत्रोपन्यासपुरस्सरं स्वरो, वर्णनीयः। ईति चियायाम्, वै वा वेति च छन्दसि, पूजनात् पूजितमनुदात्तम् काष्ठादिभ्यः, गतिर्गतौ, एतानि, व्याख्याय उदाहरणेषु समन्वयो विधेयः।

३—देवीम् अत्र ईकारोऽनुदात्तः उदात्तो वा, अग्निमीळे, अत्र स्वरप्रक्रियाम् वर्णय, 'सुबामन्त्रिते पराङ्गवत्स्वरे' एतस्यार्थमुदाहरणञ्च वक्तव्यम्। 'अभ्यस्तानामादिः' अस्य कोर्थः, उदाहरणञ्च किम्, तत्सर्वम् वाच्यम्।

४—देवा अदुह, वारयध्वात्, दिवम् सुपर्णो गत्वाय, एतेषु वैदिकप्रक्रियोक्तम् कार्यम् सूत्रोपन्यासपूर्वकं वदन्तु।

५—'आतोऽटि नित्यम्' 'छन्दसि वाप्रामेडितयोः' 'निसस्तपतावनासेवने' एषामुदाहरणानि तेषु समन्वयश्च वक्तव्यः।

## १९२६

१—ब्रह्मवाद्यम्, जगुरिः, उभयतोदतः प्रतिगृह्णाति, नू मर्तः, शकुना इव पप्तिम, वधीं वृत्रम्, धिष्व वज्रम्, व्यसीदत्, एषां लौकिकरूपप्रदर्शनपुरस्सरं साधनप्रकारो दर्शनीयः।

२—स्वपन्ति, चञ्चा, वार्यम्, जागर्षि त्वम्, मह्यं वातः पवताम्, एषु स्वरविशेषान् प्रदर्श्य सति शिष्टस्वरस्य बलीयस्त्वे मूलं सोदाहरणं निर्दिश्यताम्।

३—तास्यनुदात्तेदिति सूत्रं सोदाहरणप्रत्युदाहरणं व्याख्याय 'तयोर्य्वावचीति' सूत्रं सप्रयोजनं व्याख्यायताम्।

४—प्रक्षालितमुखः, अतीक्ष्णम्, दाण्डायनस्थलम्, अनुज्येष्ठम्, एषु स्वरविधायकानि सूत्राणि बाध्यस्वरनिर्देशं विलिख्यन्ताम्।

५—यथा पचति शोभनम्, अहो कटं करिष्यति, कटं जातु करिष्यसि क्वेव पचतीव, प्रजामेकां रक्षसि, हन्त कुरु, एषु कस्कः स्वरः।

## १९२७

१—अङ्गिरस्वत्, त्राध्वं नो देवाः, विदामक्रन्, बर्हिष्येषु निधिषु संवत्सरीणः, सोमः सधस्थम्, मरुतस्तज्जुजुष्टन, प्रप्रायमग्निः, एषु लौकिकरूपप्रदर्शनपूर्वकं वैदिकसाधनप्रकारं प्रदर्शयत।

२—द्रवत्पाणी शुभस्पती, ममत्तु नः, तित्तिरिः, अहरहर्जायते, इन्धे राजा, एषु ससूत्रनिर्देशं स्वरविशेषान् निरूपयत।

३-रज्जुशारदम्, पण्यकम्बलः, तन्तुवायः, मत्स्यचूर्णम्, एषु समासस्वरविधायक सूत्रोल्लेखनपुरस्सरं स्वरान् निरूपयत ।

४--जातु भोच्यसे, धाद् यचसि देवदत्त३ अयं वाव हस्तः आसीत् अधीष्व माणवक, पुरा विद्योतते विद्युत्, एषु बाध्यस्वरनिर्देशं स्वरविधायकानि लिखत ।

५—व्यत्ययो बहुलम्, उत्तरपदवृद्धौ सर्वञ्च, विभाषोत्पुच्छे, इति सूत्राणां विषयान् प्रदर्शयत ।

१६२८

१—वाजिनेषु, मान आधक्, देवयज्यायै, विभाजं नाशकन्, अनुसखा सयूथ्यः, मघव्यः, आसुतिं करिष्ठः, ज्या इयम्, नूनं कृणुतात्; दविध्वतो रश्मयः सूर्यस्य, अग्ना३इ पत्नीवः । एषां मध्ये नवसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि ससूत्रनिर्देशं स्वेच्छया लेख्यानि ।

२—सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः, अभ्यस्तानामादिः, थ्यथचछन्दसि, सगतिरपि तिङ्—एषामर्था उदाहरणानि च लेख्यानि ।

३—ऋत्विक्, हन्त प्रविशि, जातु भोच्यसे, त्रिपादूर्ध्वः, वस्त्रान्तरः, शचीपतिम्, काण्डपृष्ठः, तन्तुवायः, स्वोतासः, न्यर्बुदम्, मल्लिका, गेहम्, दातवाउ । एषां मध्ये दशसु स्थलेषु ससूत्रनिर्देशं स्वरविशेषाः प्रदर्शनीयाः ।

१६२६

१—रयिश्च मे, पूर्णा विवष्टि, वीरुधः पारयिष्णवः, गृभ्णामि ते, मध्वा जभार, वायवे पिबध्यै, यस्येदमप्यं हविः, कथा ग्रामं न पृच्छसि, ते नो अवन्तु, त्मना देवेषु, दिवं सुपर्णो गत्वाय, वृका अघायवः, निषत्तमस्य चरतः, हरिवो मेदिनं त्वा । एषां मध्ये नवसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि सूत्रनिर्देशपुरः सरं लेख्यानि ।

२—प्रकृत्यान्तःपादमव्यपरे, प्लुतावैच इदुतौ, स्वरितो वाऽनुदात्ते पदादौ, उदात्तयणो हल्पूर्वात् । एषां सूत्राणामर्थाः उदाहरणानि च लेख्यानि ।

३—स्वपन्ति, सर्वे, इन्धानः, जाया, कोलाहलः, जानती, शस्त्री श्यामा, गोहितम्, आर्यकुमारः, युक्तारोही, आवसथः, निरुपलम्, सत्यं भोच्यसे, अग्निम् । एषां दशसु ससूत्रनिर्देशं स्वरविशेषाः प्रदर्शनीयाः ।

१६३०

१—प्रणङ्मर्त्यस्य । प्रण आयूंषि तारिषत् । पूर्व्यासः । उभयाविनम् । भरता जातवेदसम् । नभो भरन्त एमसि । जुजोषत् । कनिक्रदज्जनुषम् । एषु लौकिकरूपप्रदर्शनपुरस्सरं वैदिककार्याणि प्रदर्शयत ।

२—उपाग्न्यधीयान । खलप्व्याशा । अग्निर्मूर्धा दिवः ककुत् । उपत्वाग्ने दिवे दिवे । अच्छावा । सेत्पृश्निः सुभ्वे । एषु स्वरप्रक्रिया निर्दिश्यताम् ।

३—सौवर्यः सप्तम्यस्तदन्तसप्तम्यः। स्वरविधौ व्यञ्जनमविद्यमानवत्। स्वरविधौ प्रत्ययलक्षणं न। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः।
इत्येतेषु वचनेषु द्वयोः प्रमाणं प्रयोजनञ्च निर्दिशत।

४—भूपतिः, दूरादागतः। फलकपुरम्। सुवीरेण। अकार्णवेष्टकिकम्। एषु कस्कः स्वरो भवति केन केन शास्त्रेण।

१६३१

१—ऋक्वता गणेन। त्राध्वं नो देवाः। या खर्वेण पिबति तस्यै खर्वः। निष्टर्क्यम्। अवयाः। प्रण आयूंषि तारिषत्। कुशिकासो अवस्यवः। सोमः सधस्थम्। पीत्वी सोमस्य वावृधे। दद्रिर्गाः। पाथ्यो वृषा। रथीरभूत्। एषां मध्ये नवसु प्रयोगेषु यानि विशेषकार्याणि तानि शास्त्रनिर्देशपुरस्सरं लेख्यानि।

२—नेतराच्छन्दसि। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य। यद्वितुपरं छन्दसि। व्यपूर्वस्य स्त्रीविषयस्य। एषामर्था उदाहरणानि च लेख्यानि।

३—एकश्रुतिः। सन्नतरः। उपग्रहः। नप्। एषां शब्दानामर्थाः प्रदर्शनीयाः।

४—हिंसन्ति। इन्धानः। ज्ञाया। स्वाहा। त्रिभिष्ट्वम्। मद्रसविधम्। महाव्रीहिः। मल्लग्रामः। उपकूलम्। देवमित्रः। यो भुङ्क्ते। काष्ठाध्यापकः। आग्नेयः। एषां मध्ये नवसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः।

१६३२

१—मनुष्वदग्ने। दाति प्रियाणि। ब्रह्मवाद्यम्। गृभाय जिह्वया मधु। दातवा उ। अनुसखा सयूथ्यः। मघव्यः। कथा दाशेम। स तूताव ईषा अक्षो हिरण्ययः। अस्मे प्रयन्धि। अश्वायन्तो मघवन्। एषां मध्येऽष्टसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि शास्त्रनिर्देशपुरःसरं प्रदर्शनीयानि।

२—ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। स्वरितो वाऽनुदात्ते पदादौ। अन्तश्च तवै युगपत्। नब्विषयस्यानिसन्तस्य। एषामर्था उदाहरणानि च लेख्यानि।

३—शिट्। अवग्रहः। न्यूङ्खाः। यद्वृत्तम्। एषां शब्दानामर्था लेख्याः।

४—वोश्चाः। चिकीर्षकः। सर्वे। बंहिष्ठः। पटुपटुः। कौञ्जायनाः। आहवनीये। पाणिन्युपज्ञम्। पञ्चदिष्टिः। गोपालः। सुग्रीवः। आवसथः। हन्त प्रविश। एषां मध्येऽष्टसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः।

५—गतिकारकोपपदात्कृदिति सूत्रे कृद्ग्रहणप्रयोजनं प्रतिपादनीयम्।

१६३३

१—वृषण्वसुः। वृत्रं हनति वृत्रहा। चक्राणा वृष्णिम्। अद्य ममार। दद्रिर्गाः। ईश्वरो विलिखः। चनो दधीत नाद्यो गिरो मे। सोम्यो ब्राह्मणः। ब्रह्मसामं भवति। उपप्रयन्तो अध्वरम् न मर्तः। त्मना देवेषु। देवासः।

हरिवो मेदिनं त्वा । एषां मध्ये नवसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि ।

२—लोपस्त आत्मनेपदेषु । उदात्तस्वरितपरस्य सन्नतरः । लघावन्ते द्वयोश्च बह्वषो गुरुः । आचार्योपसर्जनश्चान्तेवासिनि । एषामर्था उदाहरणानि च लेख्यानि ।

३—सर्वस्य ईड्यः । तिलाः । स्वाहा । आग्नेयः । आहवनीये । गोलवणम् । साङ्काश्यसिद्धः । यूपदारु । तन्तुवायः । स्त्रीसमम् । कश्चिद्भुङ्क्ते । अनुपुरुषः । एषां मध्ये नवसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः ।

४—तिङि चोदात्तवतीति सूत्रे तिङ्ग्रहणप्रयोजनं प्रतिपादनीयम् ।

## १९३४

१—अक्रन्नुपासः । मर्यः । अब्जाः । पताति विद्युत् । मघवा जभार । न म्लेच्छितवै । सुमङ्गलीरियं वधूः । तृचं सूक्तम् । अभ्राँ अपः । इद्धीनं देवान् । एषां मध्ये सप्तसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि ।

२—तयोर्दार्हिलौ च च्छन्दसि । स्वाङ्गशिटामदन्तानाम् । उभे वनस्पत्यादिषु युगपत् । एषामर्था उदाहरणानि च लेख्यानि ।

३—चिकीर्षकः । पन्थाः । घृतम् । कृषिः । अष्टाभिः । क्व । कुमारश्रमणा । विश्वदेवः । अध्ययनपुण्यम् । गौरमुखः । एषां सप्तसु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः ।

४—'उपमानं शब्दार्थप्रकृतावेव' इति सूत्रे प्रकृतिग्रहणप्रयोजनं प्रतिपादनीयम् ।

५—यद्योभावप्रसन्धानमुकारादि परं पदम् । स्वरान्तं तादृशं विद्याद् यदन्यद्व्यक्तमूष्मणः ॥ इत्यस्य सुस्पष्टं व्याख्या कार्या ।

६—विवृतिः । अयोगवाहाः । रङ्गः । स्वासी । नादी । एषामर्थाः स्पष्टीकरणीयाः ।

## १९३५

१—क्षेत्रस्य पतिना । त्राध्वं नो देवाः । अघायुः । वायवे पिबध्यै । समुद्रिया अप्सरसः । तं प्रत्नथा । एष स्य भानुः । रारन्धि । दक्षिणतः शये । मोषुणः । एषां मध्ये सप्तसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि शास्त्रनिर्देशपुरस्सरं प्रदर्शनीयानि ।

२—प्रकृत्यान्तः पादमव्यपरे । ईषान्तस्य हयादेरादिर्वा । किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् । एषामर्था उदाहरणानि च लेख्यानि ।

३—हिंसन्ति । मद्यम् । कल्याणः । आग्नेयः । त्रिभिष्टम् । आष्ट्रपक्वः । आर्य-

ब्राह्मणः । उष्ट्रकोशी । उपकूलम् । प्रत्यंशुः । एषां मध्ये सप्तसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः, स्वरचिह्नानि च प्रदर्शनीयानि ।

४—"द्वित्रिभ्यां प्राद्दन्मूर्धसु बहुव्रीहौ" इति सूत्रेऽकृतसमासान्तस्य मूर्धन्-शब्दस्य ग्रहणे प्रयोजनं प्रतिपाद्य फिट्सूत्राणां पाणिनीयैरुपादेयत्वं समर्थनीयम् ।

५—यमस्वरूपं सुस्पष्टं प्रतिपाद्यताम् ।

६—अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधाऽनुप्रदानतः ।
अस्पृष्टादिस्वरूपप्रतिपादनपुरस्सरमस्य व्याख्या कार्या ।

१९३६

१—नैनं हिन्वन्त्यपि वाजिनेषु । आ मा द्यावा पृथिवी । दधिक्राः । मरुते पतिः । प्रभ्वी । वेशोभगीनः । सुमङ्गलीः । पूषा अविष्टु । नृमर्तः । गत्वाय । अग्निमग्निं व्रतानि । एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्र-निर्देशपुरस्सरं प्रदर्शनीयानि ।

२—अनसन्तान्नपुंसकाच्छन्दसि । स्वाङ्गशिटामदन्तानाम् । गोत्रान्ते वासिमाण-वब्राह्मणेषु क्षेपे । स्वरितो वाऽनुदात्ते पदादौ । एषामर्थाः उदाहरणानि च लेख्यानि ।

३—देवीम् । शरावती । पललम् । नेत्री । पाणिनीयरौढीयाः । ब्रह्मनगरम् । प्रधौतपादः । पर्यन्तः । एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः, स्वरचिह्नानि च प्रदर्शनीयानि ।

४—(क) "अग्निमीले पुरोहितम्" इत्यस्मिन् पादे स्वरचिह्नैः सह स्वरसञ्चार-प्रकारः प्रदर्शनीयः ।

(ख) "गतिकारकोपपदात् कृत्" अत्र कृद्ग्रहणप्रयोजनं सुस्पष्टं प्रतिपादनीयम् ।

५—मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥
सुस्पष्टं व्याख्यायतां स्वशब्दैः ।

६—"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" । सविशदमेतद् व्याख्याय अयोगवाहाः के ? कथञ्च तेषामयोगवाहत्वमिति निरूपणीयम् ।

१९३७

१—गामस्य तदहः सभायां दीव्येयुः । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । अद्य ममार । दातवा उ । सप्तदशाक्षरश्छान्दसः । दाधार यः पृथिवीम् । अयं

सो अध्वरः । सुश्चन्द्र दस्म । नाभा पृथिव्याः । गृष्टिः ससूव स्थविरम् । त्रिभिष्ट्वं देव सवितः । एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि ।

२—मतुवसो रु सम्बुद्धौ छन्दसि । लवविषयस्याऽनिसन्तस्य । आचार्योपसर्जन- श्चान्तेवासिनि । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।
एषामर्था उदाहरणानि च लेख्यानि ।

३—चिकीर्षकः । केकयः । दातवै । अनुष्वन्तः । मद्रसवेशम् । पुरोहितम् । उद्दालकपुष्पभञ्जिका । विश्वकर्मा । एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः, स्वरचिह्नानि च प्रदर्शनीयानि ।

४—(क) "शृणोत ग्रावाणः" इत्यत्र "ऋचि तुनुघ" इत्यनेन दीर्घत्ववारण- प्रकारः प्रदर्शनीयः ।

४—(ख) "पूजनात्पूजितमनुदात्तम् काष्ठादिभ्यः" अत्र पूजितग्रहणप्रयोजनं प्रतिपादनीयम् ।

५—त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ।
सुस्पष्टमेतद् व्याख्याय वर्णानां त्रिषष्टित्वं च कथमिति सप्रपञ्चं निरूपणीयम् ।

६—ऊष्मणोऽष्टविधा गतयः सोदाहरणं निरूपणीयाः ।

१९३८

१—वृत्रं हनति वृत्रहा । अघायुः । पथिः सोमम् । याते अग्ने रक्षस्या तनूः । कथा दाशेम । अग्न आँ अपः । शृणुधी गिरः । अधः स्विदासीत् । तमसस् पारमस्य । पितृयाणम् । पृतनासु साह्ला । एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि ।

२—बहुलं छन्दस्यमाङ्योगेऽपि । छन्दस्यनेकमपि साकाङ्क्षम् । तवै चान्तश्च युगपत् । स्वाङ्गशिटामदन्तानाम् । एषामर्था उदाहरणानि च लेख्यानि ।

३—शरावती । रुद्रहतः । आर्यब्राह्मणः । वृकोदरः । समपादः । दक्षिणः (बाहुः) आवसथः । उष्ट्रक्रोशी । एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः स्वरचिह्नानि च प्रदर्शनीयानि ।

४—गतिकारकोपपदात्कृत् इति सूत्रे कृद्ग्रहणप्रयोजनम् प्रतिपादनीयम्, अथवा-निपातस्य चेत्यनेनैव त्वादीनां दीर्घत्वे ऋचितुनुघेत्यादिसूत्रे तेषां ग्रहणस्य वैयर्थ्यं निरस्यताम् ।

५—अनुस्वारो विसर्गश्च ≍क ≍पौ चापि पराश्रितौ इत्यादि सुस्पष्टमेतद्व्याख्याय दुःस्पृष्टशब्दार्थौ निरूप्यताम् ।

६—अयोगवाह। यम। रङ्ग। नादिन्। श्वासिन्।
इत्येतेषां शब्दानामर्थाः सोदाहरणं स्पष्टीकर्तव्याः।

१९३९

१—उपसंवादाशङ्कयोश्च। तयोर्य्वावचि संहितायाम्। निष्ठा च द्व्यजनात्। मात्रोपज्ञोपक्रमच्छाये नपुंसके। एषां सूत्राणामर्थाः लेख्याः।
२—उक्थशासः। मादयैते। ब्रह्मसामम्। ज्या इयम्। वार्त्रघ्नमितरम्। पीत्वी सोमस्य। भरता जातवेदसम्। ब्रह्मचारिणमिच्छते। वर्चस्याः। तृचं सूक्तम्। वास्तव्यम्। एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि।
३—तुभ्यम्। शरावती। जाया। कल्याणः। आहवनीये। भार्यासौश्रुतः। उपशालम्। अग्निम्। एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः स्वरचिह्नानि च प्रदर्शनीयानि।
४—उपग्रहः। स्फिग्। नप्। प्रचयः। इति सञ्ज्ञाशब्दान् व्याख्याय। दाधर्ति० इति 'प्रसित' इति सूत्रं समग्रमुद्धरणीयं व्याख्यातव्यञ्च। अथवा—'तयोर्य्वावचि संहितायाम्' इति सूत्रारम्भप्रयोजनं सुस्पष्टं प्रतिपादनीयम्।
५—उदात्तादिस्वराणां 'नवपदशय्या' (नवपदसञ्ज्ञा इति पाठान्तरम्) स्वरूपं सोदाहरणं स्पष्टीकर्तव्यम्।
अथवा—व्याकरणाङ्गानां वेदपुरुषस्य मुखत्वादिकं केनाभिप्रायेणेति सयुक्तिकं प्रतिपादनीयम्।
६—वर्णानां त्रिषष्टित्वं चतुःषष्टित्वं च कथमिति सप्रपञ्चं निरूपणीयम्।

१९४०

१—घृतस्य यजते। तारिषत्। अपलुपं नाशकत्। ओजस्या तनूः। रेवान्। चक्रा जरसम्। जनीयन्तो न्वग्रहः। अद्यामावास्येत्यात्थ३। अग्निचित् भाया३त्। नृमणाः।
एतेषां मध्ये पञ्चसु वैदिकविशेषकार्याणां सप्रमाणमुल्लेखो विधेयः।
अथवा—'तद्धानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः' 'अङ्ग इत्यादौ च' इति सूत्रे सोदाहरणं व्याख्याय, अकृत्सार्वधातुकयोः' इति दीर्घेणैव लक्ष्ये सिद्धे "अश्वाघस्यात्" इति सूत्रस्य फलमस्ति नवेति विवेचनीयम्।
२—'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इत्यस्य फलप्रमाणे समुल्लिख्य खलप्व्याशा। क्षत्रिया। पटुपटु। उच्चारपदेन प्रस्थितः। सुगन्धितेजनाः। एतेषु स्वरविशेषाः सशास्त्रं प्रदर्शनीयाः।
३—गमनज्येष्ठम्। द्विसुवर्णधनम्। शितिपादः। कृष्णाजिनम्। अत्यङ्कुशो नागः।

एषु ससूत्रं स्वरान्निर्दिश्य 'तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्योः' इति सूत्रे कुत्सनाऽभीक्ष्ण्यग्रहणं कस्य विशेषणमिति सफलमभिधीयताम्।

४—'तास्यनुदात्तेन्ङित्०' 'कुत्सागार्हपतरिक्त०' इति सूत्रद्वयं सार्थकं वर्णयित्वा 'गतिरनन्तरः' इत्यत्र 'अनन्तर' ग्रहणस्य प्रयोजनं विशदं निरूपणीयम्।

५—'अग्निः सोमः प्र वो वीर्य्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती' अत्र स्वरान् प्रदर्श्य।

अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये।
द्विरोष्ठ्यौ तु विगृह्णीयात् यत्रौकारवकारयोः।
इति कारिका सुस्पष्टं व्याख्येया। अथवा—

कीदृशो रङ्गवर्णः तदुच्चारणप्रकारश्च कः इति, ऊष्मणां कति गतयइति च निगद्य—यद्योभावप्रसन्धानमुकारादिपरं पदम्। स्वरान्तं तादृशं विद्या-द्यदन्यद्व्यक्तमूष्मणः॥

इति पद्यस्याशयो निरूपणीयः।

## १६४१

१—यवाग्वाऽग्निहोत्रं जुहोति, मर्यः, इयं ते नव्यसी मतिः, आहुवध्यैः, सोमस्येव मौञ्जवतस्य भक्षः, यज्ञं विप्रस्य मावतः, ते नो अवन्तु, इतिं न शुष्कं सरसी शयानम्, रिषण्यति, रायस्पोषं यजमानेषु—एषु वैदिककार्य्याणि लेख्यानि। अथवा

'देवसुम्नयोर्यजुषि काठके' 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' इत्यनयोर्वाक्यार्थौ निर्वर्ण्य 'इको यणचि' इत्यनेन यण्सिद्धिमाशङ्क्य 'तयोर्य्वावचि संहितायाम्' इति सूत्रस्य मूलोक्तानि फलानि पूर्वपूर्वफलेऽरुचिप्रदर्शनपुरस्सरं वर्णनीयानि।

२—'स्वरितो वानुदात्ते पदादौ' इत्यत्र व्यवस्थितविभाषायाः प्रयोजनं प्रदर्श्य, क्षैप्रप्रश्लेषाभिनिहितशब्दानामर्थानभिधाय, देवीं वाचम्, अयमग्ने जरिता, ममत्तु नः परिज्मा, शरावती—एतेषु असाधारणकार्याणि ससूत्रं प्रतिपादनीयानि।

३—फिट् सूत्राणां पाणिनीयैरुपादेयत्वं प्रसाध्य पृष्ठम्, दिवेदिवे, आस्ते, गमननेदीयः, प्रचयः, प्रक्षालितमुखः, चक्रसक्थः, देवमित्रः—एषां पञ्चसु स्वरविधायकानि शास्त्राणि ब्रूत।

४—लुलविथ, रज्जुशारदमुदकम्, पाणिनीयरौढीयाः, त्वोतासः, सर्वपाञ्चालकः, प्रजाकाण्डम्, प्रमत्तगीतम्, तत्पञ्चमः, उपाजिनम्—एषां पञ्चसु प्रयोगेषु केन केन शास्त्रेण कस्कः स्वर इत्यभिधेयम्। स्वरचिह्नानि च प्रदर्शनीयानि।

५—(क) मारुतस्तूरसि चरन्मद्रं जनयति स्वरम् ।
प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम् ॥
कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥
इमे सुस्पष्टं व्याख्येताम् ।
(ख) यद्योभावप्रसन्धानमुकारादिपरं पदम् ।
स्वरान्तं तादृशं विद्याद् यदन्यद् व्यक्तमूष्मणः ॥
पद्यमेतत्प्रकृतानुसन्धानेन व्याख्यायताम् ।

१६४२

१—वृषणश्वः, तारिषत्, रक्षस्या, सुश्चन्द्र दस्म, सर्वमा इदम्, हन्त ते ददामि, अप्स्वग्ने सधिष्टव, एषु पञ्चसु वैदिककार्य्याणि लेख्यानि ।

अथवा

(क) प्रजनयामकः, इन्द्रेण युजा तरुषेम वृत्रम्, यदुद्वतो निवतः, एतेषु सूत्रोपन्यासपूर्वकं कार्य्यविशेषा दर्शनीयाः ।
(ख) 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे' 'नित्यं छन्दसि' आभ्यां किं कार्य्यं विधीयते ।

२—अग्निमीले, अयं पन्थाः, यासिष्टं वर्तिरश्विना, रिक्तगुरुः, अधिकार्मम्, अध्ययनपुण्यम्, क्षावरं मरुतः, वृकः, कुमारप्रत्येनाः, आविश्वदेवं सत्पतिम्, अत्र केषुचित् पञ्चसु सूत्रनिर्देशपुरस्सरं स्वरविशेषा लेखनीयाः ।

३—(क) 'अग्नीत्प्रेषणे परस्य च' 'नामन्यतरस्याम्' अनयोरर्थमुपवर्णय ।
(ख) 'कृद्ग्रहणं स्पष्टार्थम्' इत्यस्याशयो निरूप्यताम् ।
(ग) 'कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम्' इत्यस्य फलं प्रदर्शनीयम् ।

अथवा

त्रीरुद्रेभ्यो अवपथाः, गर्भं माता सुधितं वक्षणासु, चतस्रः पश्य, पितृसदृशः, प्रधौतपादः, अपवीणम्, देवः पचति च खादति च, काष्ठाध्यापकः, पुरोहितम्, रत्नधाः, आद्यप्रयोगयोर्वैदिककार्य्यं शेषेषु केन कः स्वर इति ब्रूत ।

४—पाटला, परिवत्सरः, कृत्तिका नक्षत्रम्, कन्दुकः, रसना, पारावतः, तिल्यम्, एषु ससूत्रं स्वरानभिधाय उदात्तानुदात्तस्वरितानां चिह्नानि अङ्कनीयानि ।

५—(क) 'स्वरा विंशतिरेकश्च' इति शिक्षोक्ताः स्वरा विभज्य प्रदर्शनीयाः ।
(ख) अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् ।
ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥
हृदयादुत्करे तिष्ठन् कांस्ये समनुस्मरन् ।

मार्दवञ्च द्विमात्रञ्च जवन्वाँ इति निदर्शनम् ॥
इति पद्यद्वयं व्याख्येयम् ।

१९४३

१—मनुष्वदग्ने, यवाग्वाग्निहोत्रं जुहोति, अवन्नमीमदन्त हि, स्तर्या, अब्जाः, गृभाय, अपलुपं नाशकत्, ऋतव्याः, पञ्चथम्, कथा दाशेम । एषु केचन सप्त प्रयोगा विशेषसूत्रोपन्यासपुरस्सरं साधनीयाः ।

२—भय्यः, उरु णस्कृधि, परमे व्योमन्, दिवं सुपर्णो गत्वाय, हरिवो मेदिनं त्वा, एतान् संसाध्य तयोर्व्वावचि संहितायामिति सूत्रस्य प्रयोजनं कौमुदीकारपङ्क्त्युल्लेखपुरस्सरं साधु प्रतिपाद्यताम् ।

३—सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इत्यत्र प्रमाणमुक्त्वा उच्चैरधीयान, खल्प्व्याशा, सरस्वति शुतुद्रि, ममत्तु नः परिज्मा, नखम् । एषु स्वरविधायकानि सूत्राणि लिखित्वा स्वरसंचारः क्रियताम् ।

४—चोदयित्री, कृष्णसारङ्गः, गमनाबाधम्, श्रेणिकृताः, दन्तलेखकः, माषोनम्, अन्तर्वणो देशः, नह भोक्ष्यसे, आम् पचसि देवदत्त, पचति पूति । एषु स्वरविधायकानि सूत्राणि लेख्यानि ।

५—त्रिषष्टिं चतुष्षष्टिं वर्णान् लिखित्वा-"अनुस्वारयमानां च नासिकस्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इति पद्यं व्याख्याय अयोगवाहशब्दार्थ उच्यताम् ।

६—"दाराक्षतलाजासूनां बहुत्वञ्च", "मनूङ्कपक्कोऽकर्तरि" इति सूत्रद्वयं सोदाहरणं व्याख्याय सक्तु, अप्सरस्, शब्दयोः कस्मिन् लिङ्गे साधुत्वमिति सप्रमाणं प्रतिपाद्यतम् ।

१९४४

१—वृषण्वसुः, सग्धिश्च, मा त्वाग्निर्ध्वनयीत्, पृतनाषाट्, मन्त्रं वोचेमाग्नये, न म्लेच्छितवै, उदेतोः, सभेयो युवा, सोम्यो ब्राह्मणः, या ते अग्ने रजस्या तनूः । एतेषु कामपि रेखाङ्कितान् पञ्च प्रयोगान् साधयित्वा "इन्धिभवतिभ्यां च" इति सूत्रं प्रत्याख्यायताम् ।

२—मूर्धन्वतीरुपदधाति, प्रबाहवा, स्विन्नः स्नात्वी मलादिव, वधीं वृत्रम्, पितृयाणम् । एतेषु रेखाङ्कितानि पदानि विशेषकार्यविधायकसूत्रैः संसाध्य "सुप्तिङुपग्रहलिङ्गनराणाम्" इति कारिका उदाहरणप्रदर्शनपुरस्सरं व्याख्येया ।

३—गोपायतं नः, वोऽश्वाः, आशितम्, दक्षिणो बाहुः, सुगन्धितेजनाः, पृष्ठम्, परमवाचा, रज्जुशारदमुदकम् । एतेषु रेखाङ्कितपदेषु स्वरसंचारं विशेषसू-

त्रोपन्यासपुरस्सरं विधाय "प्रकृतिग्रहणं किं प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्थौ तत्रैव यथा स्यात्" इति पङ्क्तिर्व्याख्यायताम् ।

अथवा

द्रवत्पाणी, प्रष्ठौहः, यासिष्टं वर्तिरश्विनौ, अरित्रगाधम् , अक्षण्वन्तः, नभन्तामन्यके समे—एषु रेखाङ्कितेषु विशेषसूत्रोपन्यासपुरस्सरं स्वरसंचारं विधाय सन्नतर, प्रश्लेष, क्षिप्र, नप् , शब्दानामर्थान् लिखत ।

४—गमनचिरम् , पाणिनिरौढीयाः, पारेवडवा, वैयाकरणहस्ती, वृकोदरः, तिलमिश्राः, अजामेकां जिन्वति, सत्यं भोक्ष्यसे । एतेषु स्वरसंचारं विशेषसूत्रोपन्यासपुरस्सरं विधाय गतिकारकोपपदात् कृदिति सूत्रघटककृद्ग्रहणस्य प्रयोजनमुच्यताम् ।

५—हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
उरस्यं तद्विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥
कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्विषात् ॥

इति पद्यद्वयं व्याख्याय वेदस्य षडङ्गानि कानि के च तत्र विषया इति प्रतिपाद्यताम् ।

६—अन्यूप्रत्ययान्तो धातुः, घञबन्तः, इति सूत्रद्वयं सोदाहरणं व्याख्याय प्रावृट्-विप्रुट्-शब्दयोः कस्मिन् लिङ्गे साधुत्वं कौ चानयोरर्थौ इति प्रतिपाद्यताम्

१९४५

१—घृतस्य यजते, प्र ण आयूंषि तारिषत् , गवामिव श्रियसे, छन्दस्यः, दाधार यः पृथिवीम् , उरो अन्तरिक्षम् , एतान् संसाध्य "यजुषि पादाभावादनन्तः पादार्थं वचनम्" अस्य क आशयः ।

२—'तयोर्य्वावचि संहितायाम्' इति सूत्रं सोदाहरणं व्याख्यायेको यणचि सूत्रेणैवास्य गतार्थत्वे किमर्थमिदं सूत्रमिति सम्यगभिधीयताम् ।

अथवा

सुपां सुलुक् , द्व्यचोऽतस्तिङः, कव्यध्वरपृतनस्यर्चि लोपः, इति सूत्राणि व्याख्यायन्ताम् ।

३—द्रवत्पाणी शुभस्पती, प्र य आरुः, व्यचक्षयत्स्वः लूयते केदारः स्वयमेव, अध्वर्युभिः पञ्चभिः, युञ्जन्त्यस्य काम्या, कल्याणः, सुगन्धितेजनाः, उत त्वः पश्यन् , वाचा विरूपः, एषा नेत्री, एषु सप्तसु स्वरान् प्रसाध्य "स्वरविधौ व्यञ्जनमविद्यमानवत् इत्येतदत्र न मरुत्वानिन्द्र, नियुत्वान् वायवागहि" अस्याभिप्रायो वर्णनीयः ।

४—सद्दशश्वेतः, पाणिन्युपज्ञम्, पञ्चारत्नयः, पाणिनीयरौढीयाः, यूपदारु, अन्वेतवा उ, प्रथमवैयाकरणः, उद्दालकपुष्पभञ्जिका, एषु पण्णां स्वरसाधुत्वं तल्लेखनप्रकारं च प्रदर्श्य गतिकारकोपपदात् कृत्, इति सूत्रे कृद्ग्रहणफलं प्रतिपादयत ।

५—मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।
प्रातः सवनयोगं तं छन्दो गायत्रमाश्रितम् ॥
कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥

इमे सुस्पष्टं व्याख्याय शिक्षादीनां वेदाङ्गत्वं वेदावयवत्वेन प्रकारान्तरेण वेति विचार्य्यताम्

१९४६

१—वृपणश्वः, अक्रन्नुषासः, मा त्वाग्निर्ध्वनयीत्, वीरुधः पारयिष्णवः, प्रियः सूर्ये प्रियो अग्नाभवाति, गृभ्णामि ते, जरसा मरते पतिः, एतान् संसाध्य वैदिकप्रयोगाणां लौकिकप्रयोगानतिरेकात् वैदिकप्रक्रियायाः पृथगुल्लेखे युक्तिः प्रदर्शनीया ।

२—ऋतव्याः, शन्तातिः, श्रिता नो ग्रहाः, यत्रा नश्चक्रा, सत्येनोत्तभिता भूमिः, वक्ष्यन्ती वेदागनीगन्ति कर्णम्, अक्षण्वन्तः, अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्, सुपेशसस्करति, महाँ इन्द्रो य ओजसा, एषु केऽपि सप्त संसाध्याः ।

अथवा

"नसत्तनिषत्तानुत्त–" "अङ्गयुक्तं तिङाकाङ्क्षम्" "प्रतिश्रवणे च" "दाश्वान् साह्वान् मीढ्वाँश्च" इमानि सूत्राणि सोदाहरणानि व्याख्येयानि ।

३—आ ते पितर्मरुताम्, तमोशानासः, चतुरः कल्पयन्तः, ईड्यो नूतनैरुत, लुलविथ, छात्रप्रियोऽनध्यायः, श्वाफल्कचैत्रकाः, सुप्तप्रलपितम्, प्रत्यंशुः, एहि मन्ये भक्तं भोक्ष्यसे भुक्तं तरवतिथिभिः, अजामेकां जिन्वति–एषां केष्वपि सप्तसु प्रयोगेषु स्वरविधायकानि सूत्राणि लेख्यानि ।

४—मुहूर्तसुखम्, ग्रामनापितः, अपरकृष्णमृत्तिका, शोणा धृष्णू नृवाहसा, उपाध्यायं पदातिं गमयति, एषु प्रयोगेषु स्वरविशेषान् प्रदर्श्य—
पराादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥
इति श्लोकवार्त्तिकस्योदाहरणानि लिखत ।

५—अनुस्वारयमानाञ्च नासिकास्थानमुच्यते।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः॥
यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते।
एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया॥
इमौ श्लोकौ व्याख्येयौ।

१६४७

१—वृषण्वसुः, सग्धिश्च मे, विदामक्रन्, अद्य ममार, सभेयः, नभस्यो मासः, सोम्यं मधु, यो जागार, भय्यः, एषु कानपि पञ्च प्रयोगान् वैदिकसूत्रोद्धरणमुखेन निष्पाद्य तत्र लौकिकप्रयोगाः कथं भवन्तीति निर्दिश्यताम्।
२—प्रथमं दध्र आपः, सरसी शयानम्, ब्राह्मणासः, अलर्षि युध्म खजकृत्पुरन्दर, महाँ इन्द्रः, ये ३ यजामहे, हन्त ते ददामि३, अग्न३यिन्द्रम्, अभी षु णः। एषु किमपि प्रयोगपञ्चकंससूत्रनिर्देशं निष्पाद्य "वयस्यासु मूर्ध्नो मतुप्" इति सूत्रमनुवर्त्तनाऽऽवर्त्तनाभ्यां व्याख्यायताम्।
३—'गोपायतं नः' इत्यत्र स्वरसङ्घर्षक्रममुद्भाव्य व्यवस्थाप्य च तमिति स्वरितमादाय शेषनिघातशङ्का सप्रमाणं निराक्रियताम्।
४—देवीं वाचम्, स्वपन्ति, वेत्रवती, ज्येष्ठः, वाचा विरूपः, कृष्णसारङ्गः, मद्रसविधम्, पुरोहितम्, गवाध्यक्षः, गुडोदकम्, आप इन्द्रावरुणौ, गौरमुखः, एषु क्वचित् सप्तसु प्रयोगेषु स्वोपन्यस्तसूत्रैर्नामनिर्देशेन स्वरान् विधाय जपन्युङ्खसामशब्दानामर्था लिख्यन्ताम्।
५—अग्निमीळे, जातु भोक्ष्यसे, आम् पचसि देवदत्त३।
एषु स्वरप्रक्रियां प्रदर्श्य क्वचित् प्रयोगेषु स्वरत्रयचिह्नमुल्लिख्यताम्।
६—पाठकानां गुणदोषौ निर्दिश्य निम्ननिर्दिष्टश्लोकः सोदाहरणं व्याख्यायताम्—अलाबुवीणानिर्घोषो दन्तमूल्यः स्वरानुगः।
अनुस्वारस्तु कर्त्तव्यो नित्यं ह्रोः शषसेषु च॥

१९४८

१—अक्रन्, तारयित, गुग्गुलुः, मावतः, त्री रुद्रेभ्यो अवपथाः, उरु णस्कृधि, एमसि, तरुतारम्, उपरि स्विदासीत्३—एषु पञ्चानां सप्रमाणं सिद्धिं प्रदर्श्य—नोनयति०, वेशोयश०, मन्त्रे सोमाश्वेन्द्रिय०, सुपां सुलुक्०, तयोर्य्वावचि०—एषु चतुर्णां सूत्राणां सोदाहरणमर्थाः प्रदर्श्यन्ताम्।
२—नोदात्तस्वरितोदय०, त्यागराज०, तास्यनुदात्तेत्०, न भूताधिक०, नाचार्यराजर्त्विक्०, निपातैर्यद्यदि०—एषु पञ्चानामर्थमुदाहरणानि च विलिख्य, तेऽवदन्, कर्णाभ्यां छुबुकादधि, चोदयित्री सूनृतानाम्, शङ्खीश्यामा,

सावर्णिमाण्डूकेयौ, कुसूलबिलम्, इन्द्राबृहस्पती, पुत्रासो यत्र पितरो भवन्ति—एषां पट्सु स्वरसिद्धिः प्रतिपाद्यताम् ।

नाभि-रज्जु-अर्चिष्-ब्रह्मन्-कुशा-नेत्र शब्दानां लिङ्गमभिधीयताम् ।

१९४९

१—वृषणश्वः, सधिश्रमे, शुन्धध्वं दैव्याय, गृभ्णामि, पतयालुः, माधव्यः, उभयतोदतः, वर्षिष्ठे अधिनाके, वितलिरे, सोमोह्वरितः, सुम्नयुः ।

एषु दशानां सप्रमाणं साधुत्वमभिधाय ऋचितुनु० भावलक्षणेस्थेण् सुप्तिङुपग्रह० एषां त्रयाणामुदाहरणान्यर्थाश्च लेख्याः ।

यद्वा—तुमर्थेसेसे० मन्त्रेघ सह्वर० तद्वानासा० श्रृणु० एषां सोदाहरणमर्थमभिधाय—गामस्य तदहः सभायां दीव्येयुः, जरसा मरते पतिः, पूर्व्यासः, बहुप्रजाः, गभीरशां उग्रपुत्रे, यजध्वैनं इमानि साधय ।

२—सुबामन्त्रिते० अन्तोदात्तादुत्तरपदा० कुरुगार्हपत० थाथघञ्क्ता० स्फिगपूत० गत्यर्थलोटाल्लृण्नचेत्० एषु पञ्चानां सोदाहरणमर्थमुक्त्वा—

आते पितर्मरुताम्, जागर्षि त्वम्, कृषन्नित्फाल आशितम्, ज्येष्ठ आह चमसा, पललम्, नमन्तामन्यकेसमे, अभिचष्टे अनृतेभिः, अन्वेतवा उ, गोकर्णः, धर्ता वज्री पुरुष्टुतः, त्रिपादूर्ध्वः, तयोरन्यः पिप्पलं स्वाद्वत्ति, उशन्तिहि, एषां दशसु स्वरसिद्धिरुद्भावनीया स्वरलेखनपुरस्सरम् ।

३—मिन्यन्त-तलन्त-उकारान्त-शब्दानाम्, भूमि-इषु-यूष-तूल-मृत्युशब्दानां च लिङ्गनिर्णयः प्रमाणीक्रियताम् ।

१९५०

१—नैनं हिन्वन्त्यपि वाजिनेषु, अचक्षमीमदन्तहि, प्रण आयूंषि तारिषत्, ततुरिः, याते अग्ने रक्षस्या तनुः, शिवतातिः, सुमङ्गलीः, अपांस्वेमन्, प्रथमं दध्र आपः, कनिकदज्जनुषम्, हरिवो मेदिनं त्वा, एषु दशानां सप्रमाणं साधुत्वमभिधाय, छन्दसि लुङ्लङ्लिटः, अक्षरसमूहे छन्दस उपसंख्यानम्, प्रकृत्यान्तःपादमव्यपरे, एषु द्वयोः सोदाहरणमर्थां लेख्याः ।

अथवा

वयस्यासु मूर्ध्नो मतुप्, साढ्यै साढ्वा साढेति निगमे, विचार्यमाणानाम्, प्लुतावैच इदुतौ, एषां सोदाहरणमर्थमभिधाय, यवाग्वाग्निहोत्रं जुहोति, मित्रवयं च सूरयः, सभेयः, अभ्रआँ अपः, वर्धीं वृत्रम्, अन्वापनीफणत्, एते प्रयोगाः साधु साधनीयाः ।

२—स्वरितात्संहितायामनुदात्तानाम्, तास्यनुदात्तेत्, राजन्यबहुवचनद्वन्द्व०, उपमानं शब्दार्थप्रकृतावेव, नाव्ययदिक्शब्द०, पूजनात्पूजितमनुदात्तम्०,

एषु पञ्चानां सोदाहरणमर्थमुक्त्वा, गोपायतं नः, मांहि चीकरताम्, इन्धानोअग्निम्, घृतं मिमिक्षे, न्यङ्ङुत्तानः, ब्रह्मबन्ध्वा, रज्जुशारदम्, पञ्चारत्निः, छात्रि शालम्, गार्गीबन्धुः, अभिमुखम्, आहि रुहन्तम्, एषां नवसु स्वरलेखनपुरस्सरं स्वरसिद्धिः प्रदर्शनीया।

५—अशनि, तिथि, इषुधि, संग्रामशब्दानाम्, थोपध, षोपध, ल्लोपध, त्रान्त, शब्दानां च लिङ्गमभिधीयताम्,

## १९५१

१—वृषण्वसुः, त्राध्वं नो देवाः, अघायुः, दिदृक्षेण्यः, ऋतव्याः, शुनमष्ट्राव्यचरत्, आशिरं दुहे, श्रुधी हवम्, विराजं गोपतिं गवाम्, अस्तुश्रौ३षट्, सूर्यो नो दिवस्पातु, एषु दशानां सप्रमाणं साधुत्वमभिधाय, उपसंवादाशङ्क्योश्च, ऋचितुनुघ०, तयोर्य्वावचि संहितायाम्, एषु द्वयोः सोदाहरणमर्थां लेख्याः।

अथवा

व्यत्यो बहुलम्, मत्वर्थे मासतन्वोः, तन्वादीनां छन्दसि बहुलम्, क्षियाशीः प्रैषेषु तिङाकाङ्क्षम्, एषां सोदाहरणमर्थमभिधाय, अञ्जत वा अस्य दन्ताः, मन्त्रं वोचेमाग्नये, सोम्य मधु, तृचं सूक्तम्, यो नः पिता जनिता, अधा शतक्रत्वो यूयम्, सहोर्जा तरित्रतः, देवां अच्छा सुमती, एते साधु साधनीयाः।

२—सुबामन्त्रिते पराङ्गवत्स्वरे, बहुव्रीहौ प्रकृत्या पूर्वपदम्, उत्तरपदवृद्धौ सर्वं च, जातिकालसुखादिभ्योऽनाच्छादनात्०, तिङो गोत्रादीनि०, गत्यर्थलोटालृण्नचेत् ०, एषु पञ्चानां सोदाहरणमर्थमुक्त्वा, दैवीं वाचम्, ममत्तु नः परिज्मा, ईड्यो नूतनैरुत, वने न वायः, उतत्वः पश्यन्, द्युभिरक्तुभिः, कठाध्वर्युः, सावर्णिमाण्डूकेयौ, आर्यकुमारः, वृद्धकुमारो, धर्तावज्री पुरुष्टुतः, उशन्ति हि, एषां नवसु स्वरलेखनपुरस्सरं स्वरसिद्धिः प्रदर्शनीया।

५—श्रोणि, दुन्दुभि, सक्तु, मान, शब्दानां, तूल, दैव, पट्ट, श्रृंग शब्दानां च लिङ्गमभिधीयताम्।

## १९५२

१—समीचे, पृतनाषाट्, अघायुः, सभेयः, ऋतव्याः, मघव्यः, शिवतातिः, अत्र पञ्चानां साधुत्वं विधेयम्, व्याख्येयं वा छन्दसि निष्टर्क्येति सम्पूर्णं सूत्रं सोदाहरणम्।

२—विंशिनः, प्रत्नथा, चिखाद, पूरुषः, ततुरिः, अचीवृधत्, भुवरिति, दिवस्पातु,

एषु पञ्च साधनीयाः, प्रदर्शनीयं वा 'दाधर्तिदर्धर्तीति' सूत्रघटकप्रयोगाणां साधुत्वम् ।

३—आगच्छ भो माणवक, जागर्षित्वम् , रिक्तः सुखम्, पञ्च, हलीषा, स्थाली-पाकः, एतेषु पञ्चसु स्वरविधायकविशेषसूत्राणि लिखन्तु ।

४—त्रिभिष्ट्वं देव, भुवनपतिः, राजब्राह्मणः, नान्दीपुरम्, उच्चैःकारम्, यत्प्रपचति, इह पञ्चसु स्वरविशेषान्निर्दिशन्तु ।

५—अष्टौ वर्णजनकस्थानानि कानि ? पाठकगुणाः के ? चत्वारो यमाः के ? के अनुनासिकाः ? इदं सर्वं पाणिनीयशिक्षानुसारेण निर्दिश्य 'आत्मा बुद्ध्या समेत्यार्थान्' इत्यारभ्य 'वर्णान् जनयते' इत्यन्तेन शिक्षाग्रन्थेन वर्णितोऽर्थः स्वगीर्वाणगिरा वर्णनीयः ।



मुद्रकः—विद्याविलास प्रेस, बनारस—१